कॅम्पको दा प य ति

# गुरुतर शोभनतरं चॉकोलेटम्

Campco mega bite

"इदानीं कीदृशमिति?"



"उत्कृष्टम्।"

"किं क्रीमी चॉकोलेटम्?"



"स्वादुतरम्।"

"पथ्यविषयकं ते किं मतम्?"



"मे अतीव प्रियम्।"

## नूतन मेगॅ बाइट

भारतस्य विशालतम नूतनतम संयन्त्रात्।




कॅम्पको लिमिटेड, मंगळूर

R K SWAMY/BBDO CL 8347 SK

# 'पितरौ' इत्यत्र एकशेषवृत्तिः एव।

आचार्यः- आगच्छतु वत्स! मम मित्रवरेण लिखितम् एतत् पत्रं पठतु तावत्।

शिष्यः - ''....... लघुसिद्धान्तकौमुद्यां द्वन्द्वसमासविभागे 'पितरौ' इति उदाहरणं दत्तम्। तत्र पिता मात्रा इति सूत्रम् अपि अस्ति। ......''

आ - पूर्वं 'पितरौ' इत्यस्य विषये चिन्तनं कृतम् आसीत् खलु। (चन्दमामा– नवेम्बर्-९०) तत् पठित्वा तेन एतत् पत्रं लिखितम्। सन्देहस्य परिहारः अपि प्रार्थितः आसीत् तेन। भवान् लघुसिद्धान्तकौमुदीं पठितवान् खलु? द्वन्द्वसमासस्य प्रकरणं परिशीलयतु।

शि - पश्यामि तावत्। (परिशील्य) आं, श्रीमन्! 'पिता मात्रा' (१-२-७०) इति सूत्रम् अस्ति। 'माता च पिता च पितरौ, मातापितरौ वा' इति उदाहरणं च प्रदर्शितम् अस्ति।

आ - अत्र भ्रान्तेः अवकाशः अस्ति इति तु सत्यम्। प्रकरणं तु द्वन्द्वसमासस्य। तस्मिन् 'पितरौ' इति दृश्यते। अतः सहजतया भ्रान्तिः जायते।

शि - 'पितरौ' इत्येतत् एकशेषवृत्तेः उदाहरणम् इति मम स्पष्टम् आसीत्। लघुकौमुद्याः परिशीलनेन तु – 'पितरौ इत्येतत् द्वन्द्वसमासस्यापि उदाहरणं स्यात् वा' इति सन्देहः उत्पन्नः इदानीम्। वस्तुस्थितिः अत्र का श्रीमन्?

आ - पितरौ इत्येतत् एकशेषवृत्तेः एव उदाहरणम्। तत्र पुनः सन्देहः मास्तु भवतः। 'माता च पिता च' इत्यत्र पितरौ इति एकशेषवृत्तिः। एकशेषाऽभावे 'मातापितरौ' इति द्वन्द्वसमासः।

लघुकौमुदीविषये एवं चिन्तयामि– प्रकरणवशात् तत्र 'मातापितरौ'

इति रूपम् उदाहर्तव्यम् आसीत्। एकशेषाभावे खलु द्वन्द्वसमासस्य प्रवृत्तिः? अतः प्रसङ्गवशात् पितरौ इति रूपं, 'पिता मात्रा' इति सूत्रं च प्रस्तुतम्। अतः तत्र भ्रान्तेः अवकाशः।

शि - एकशेषवृत्तेः समासवृत्तेः च कः भेदः श्रीमन्?

आ - समग्रा समासवृत्तिः विकल्प्यते। तन्नाम समस्तं व्यस्तं वा वक्तुं शक्नुमः। एकम् उदाहरणं पश्यतु– 'राजपुरुषः' इत्यत्र समासवृत्तिः। राजपुरुषः इत्येव सर्वत्र प्रयोगः करणीयः इति न नियमः। 'राज्ञः पुरुषः' इत्यपि व्यस्तः प्रयोगः कर्तुं शक्यः। किन्तु एवं समग्रा एकशेषवृत्तिः न विकल्प्यते। रामश्च रामश्च रामश्च–रामाः इत्यत्र 'रामाः' इत्येव प्रयोक्तव्यं, नान्यथा, एकशेषवृत्तित्वात्।

शि - पितरौ इत्यत्र विकल्पेन एकशेषः।

आ - आम्। एकशेषवृत्तौ द्वित्राणि सूत्राणि विकल्पेन एकशेषत्वं बोधयन्ति। एकशेषाभावे तु द्वन्द्वसमासः। अतः एव प्रौढमनोरमायां व्याख्याने उच्यते– 'द्वन्द्वापवादः एकशेषः इति व्यवहारः*' इति। एवं च एकशेषवृत्तिः अन्या, समासवृत्तिः अन्या एव। 'माता च पिता च' इत्येतस्य विग्रहवाक्यस्य एकशेषवृत्तित्वे पितरौ इति रूपम्, एकशेषाभावे तु मातापितरौ इति द्वन्द्वसमासः।

शि - लघुकौमुद्यां किमर्थम् एतत् विवरणं न दत्तम्?

आ - सिद्धान्तकौमुद्याः सङ्ग्रहरूपः खलु स च ग्रन्थः? सङ्ग्रहे सर्वे अंशाः कथं योजयितुं शक्यन्ते? प्राथमिके स्तरे बोधनार्थं स च सङ्ग्रहः कृतः। प्राथमिके स्तरे सर्वान् अंशान् बोधयितुं न अर्हामः खलु वयम्। अतः एतादृशं विवरणं न दत्तं स्यात् तत्र।

---

* एकशेषस्य अपवादत्वम् अपि न आवश्यकम् इति अग्रे प्रतिपाद्यते इति तु अन्यदेतत्। अतः एव 'इति व्यवहारः' इति उक्तम्।

* *



# चन्दमामा

फेब्रवरी-१९९१

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ३-००

वार्षिकं ग्राहकशुल्कं रू. ३६-००

# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

संस्कृतं सम्यक् अधीतवान् कश्चित् पृच्छति– 'मम संस्कृतज्ञानं सम्यक् अस्ति। एतादृशेन मया अपि सम्भाषणं करणीयम् एव इति आग्रहः किमर्थम्?' इति। एतस्य किम् उत्तरम्? वस्तुतः एतस्य उत्तरम् अन्येन वक्तव्यं नास्ति। प्रश्नकर्त्रा एवं चिन्तयित्वा उत्तरं प्राप्तव्यम्।

कश्चित् लिखति– 'वैयाकरणानां विना अत्र निर्णयः क्लेशाय' इति। अपरत्र पत्रिकायां मुद्रितं दृश्यते– 'निश्चयामास' इति। अन्यः प्रयोगं करोति– 'अहं गन्तव्यम्' इति। एवं प्रयोक्तारः न अव्युत्पन्नाः। एतान् प्रयोक्तॄन् वयं पुनः पृच्छामः चेत् ते वदन्ति– 'एते प्रयोगाः असाधवः' इति। एतावता सिद्ध्यति यत् तेषां व्युत्पत्तिः, नियमज्ञानं तु अस्ति इति। तथापि दोषः ततः किमर्थं जातः? तत्र एकम् एव कारणम्– अभिव्यक्तौ परिश्रमस्य अभावः। अभिव्यक्तिः द्विधा भवितुम् अर्हति– सम्भाषणेन लेखनेन च इति। लेखनरूपा अभिव्यक्तिः अवकाशम् अपेक्ष्यते। विषयः, प्रयोजनं, समयः इत्यादयः तत्र चिन्त्यन्ते। किन्तु सम्भाषणरूपायाम् अभिव्यक्तौ एवं सापेक्षत्वं नास्ति। भावाभिव्यक्तिः बहुधा क्रियते एव। तत्र संस्कृतम् आश्रितं चेत् इष्टसिद्धिः। सम्भाषणं द्विनिष्ठम् इत्यतः अन्यस्य अभावे का गतिः इति प्रश्नः कदाचित् उत्पद्येत। अल्पेनैव प्रयत्नेन सम्भाषणकर्तुः निर्माणार्थं रचिता प्रणाली प्रसिद्धा अस्ति इदानीम्। अतः तां प्रणालीम् आश्रित्य अन्यः सज्जीकरणीयः।

प्रयत्नः प्रचलति चेदेव परिष्कारार्थम् अवकाशः। प्रयत्नस्य एव अभावे कुतः परिष्कारः?

सम्पुटः–७ फेब्रवरी–१९९१ सञ्चिका–११

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००






रसप्रश्नाः–

# रणरङ्गे विराजते कुम्भकर्णः

(प्रतिदिनम् अपि पराजयम् एव अनुभवन् खिन्नः रावणः महता प्रयत्नेन कुम्भकर्णम् उत्थापितवान्। रावणस्य अनुज्ञां प्राप्य कुम्भकर्णः गर्वेण रणरङ्गं प्रविष्टवान्। रणरङ्गे तेन बहुधा प्रतापातिशयाः प्रदर्शिताः। वाल्मीकिरामायणस्थाम् एतां घटनाम् आधारीकृत्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तानि उत्तराणि जानन्तु।)

I. निद्रातः उत्थाय आगतः कुम्भकर्णः रावणसमीपं गत्वा किं कृतवान्?
(अ) युद्धार्थम् अनुज्ञां प्रार्थितवान्।
(आ) सीतां रामाय अर्पयतु इति बोधितवान्।
(इ) अहं पुनरपि निद्राम् एव इच्छामि इति उक्तवान्।

II. कुम्भकर्णस्य चिन्तनरीतिः अयुक्ता इति कः उक्तवान्?
(अ) प्रहस्तः। (आ) रावणः। (इ) महोदरः।

III. 'युद्धं मास्तु, कपटोपायेन सीता वञ्चनीया वशीकरणीया च' इति रावणं कः बोधितवान्?
(अ) महोदरः। (आ) द्विजिह्वः। (इ) अकम्पनः।

IV. रणरङ्गम् आगतं कुम्भकर्णं दृष्ट्वा धावत्सु वानरेषु कः वानरवीरः धैर्यं पूरितवान्?
(अ) सुग्रीवः। (आ) अङ्गदः। (इ) हनूमान्।

V. कुम्भकर्णः मूर्च्छितं कम् उन्नीय लङ्कां प्रति गतवान्?
(अ) हनूमन्तम्। (आ) अङ्गदम्। (इ) सुग्रीवम्।

उत्तराणि–

I – (आ). II – (इ). III – (अ). IV – (आ). V – (इ).

# शान्त्यर्थं नोबेल्पारितोषिकम्

"शान्तिः स्थिरीकरणीया चेत् युद्धार्थं सिद्धैः भाव्यम्" इति वदन्ति स्म प्राचीनरोमन्जनाः। किन्तु 'एतस्य सिद्धान्तस्य अनुगुणं युद्धं शान्तिं स्थिरीकर्तुं न अर्हति' इति विषयः इदानीं लोके सुस्पष्टः। यतः युद्धसन्नाहः अन्यान् युद्धे प्रेरयति।

कश्चन देशः युद्धार्थं सन्नद्धः इति भावयाम। तदा किं भवति? प्रतिवेशिषु राज्येषु भयस्य आतङ्कस्य सन्देहस्य च परिसरः निर्मितः भवति। आत्मरक्षणार्थं ते देशाः अपि युद्धास्त्राणि सङ्गृह्य स्थापयन्ति। एतादृशे सन्दर्भे अल्पा अपि घटना अन्यथाभावस्य तद्द्वारा युद्धस्य च कारणं भवति। शान्तिः नामावशिष्टा भवति। प्राचीनकालात् अपि एवम् एव प्रवृत्तम्।

महान्तः नेतारः उच्चस्वरेण शान्तिविषये भाषणं कुर्वन्ति। किन्तु एतादृशानां चित्तशुद्धिः सन्देहास्पदम् एव। यतः एते मारकास्त्राणां विक्रयणस्य द्वारा स्वदेशस्य सम्पत्तेः वर्धनम् इच्छन्तः युद्धस्य साहाय्यकाः भवन्ति। एवं मनसि युद्धाकाङ्क्षां स्थापयन्तः अपि मुखेन शान्तिमन्त्रं जपन्तः एतादृशाः नायकाः नयवञ्चकाः एव।

मनसि अविद्यमाना शान्तिः बहिः अन्विष्टा चेत् किं प्रयोजनम्? हृदये यदि शान्तिभावना स्यात् तर्हि एव वचनैः






क्रियमाणस्य शान्तिप्रतिपादनस्य सार्थकता। अतः शान्तिप्रियतायाः प्रमाणं तत्तस्य व्यवहारः एव, न तु वचनानि।

सोवियत्देशस्य नायकः मिखैल् गोर्बचेव् शान्तिप्रियः। वचनैः व्यवहारेण च एषः स्वस्य शान्तिप्रियतां प्रमाणीकृतवान् अस्ति। पूर्वं साम्यवादसर्वकारः सोवियत्प्रजाः, स्वाधीनानां पोलेण्ड्सदृशानां देशानां प्रजाः च नितरां पीडयति स्म। अमेरिकादीन् प्रमुखान् पाश्चात्यदेशान् विरुध्य व्यवहृत्य स्पर्धाभावनया मारकास्त्राणां निर्माणम् अकरोत्। एतादृशानि कृत्यानि अनुचितानि इति अङ्गीकृतवान् गोर्बचेव्। 'व्यक्तिस्वातन्त्र्यं देशस्वातन्त्र्यं च पुरस्करणीयम्। परस्परद्रोहः यथा न प्रचलेत् तथा परस्परावगतिः स्यात्' इत्येतं विषयं सदाचारशीलाः सर्वे अङ्गीकुर्वन्ति एव।

शान्तिनिमित्तं गोर्बचेव्वर्याय नोबेल्-पारितोषिकं दत्तं यत् तत् सर्वथा उचितम्। योग्यायै व्यक्त्यै पारितोषिकं केवलं दत्तं चेत् न पर्याप्तम्। पारितोषिकस्वीकर्तुः तस्य शान्तिप्रियस्य आशयः विचारः च जागतिकनेतृभिः सम्यक् अवगन्तव्यः। तदनुगुणं व्यवहर्तव्यं च। तदा एव पारितोषिकदानं सार्थकं स्यात्। तदा एव प्रपञ्चे शान्तिः स्थिरीकृता स्यात्।



# परीक्षाफलम्

चन्दनदेशं विक्रमार्कवर्मा नाम राजा पालयति स्म। तस्य पुंसन्तानः न आसीत्। अतः एकमात्रपुत्रीं श्रीललितां महत्या प्रीत्या पालितवान् आसीत् सः। श्रीललिता श्रद्धया विद्याभ्यासं कृतवती। इदानीं सा षोडशवर्षीया तरुणी। तस्याः सौन्दर्यम् अपूर्वम् आसीत्। बुद्धिमत्ता अपि असदृशी एव। अतः तस्याः नाम सर्वेषु देशेषु श्रूयते स्म।

प्राप्तवयस्कायाः पुत्र्याः विवाहः काले समाप्ता स्यात् इति इच्छति विक्रमार्कवर्मा। 'यः जामाता भवेत् सः एव भावी राजा अपि भवेत्। अतः योग्यः जनरञ्जकः वरः एव अन्वेष्टव्यः। अन्यच्च पुत्री श्रीललिता मेधाविनी। यदि वरः प्रज्ञावान् स्यात् तर्हि एव तम् अङ्गीकुर्यात् पुत्री। एवं धीरः सुन्दरः जनप्रियः प्रज्ञावान् वरः अन्वेष्टव्यः मया' इति आलोचितवान् सः।

कदाचित् कश्चन पण्डितः विक्रमार्कवर्मणः आस्थानम् आगतवान्। स्वस्य परिचयं निवेद्य उक्तवान् सः– "महाराज! केशवशर्मा इति मम नाम। विदिशा मम देशः। काशी, तक्षशिला, उज्जयिनी इत्यादिषु नगरेषु स्थिताः पण्डितप्रकाण्डाः अपि मम पाण्डित्यं दृष्ट्वा आश्चर्यचकिताः सन्ति। अहं बहून् देशान् गत्वा, तत्रत्यान् पण्डितान् जित्वा, तत्तद्देशस्य राज्ञा सम्मानं प्राप्तवान् अस्मि। एवं देशसञ्चारं कुर्वन् भवदास्थानम् आगतः। अहं त्रीन् प्रश्नान् पृच्छामि। तेषाम् उत्तरं पण्डितः पामरः वा दातुम् अर्हति। योग्यम् उत्तरं प्राप्तं चेत् अहम् इतः पूर्वं प्राप्तान् बिरुदान् तस्य उत्तरदातुः पदतले समर्प्य मौनम् इतः निर्गमिष्यामि। किन्तु भवद्देशीयेषु पण्डितेषु पामरेषु वा यः कोऽपि



उत्तरं दातुं न शक्नोति चेत् भवद्देशीयाः पण्डिताः मां शिबिकायाम् उपवेश्य शिबिकां स्वयं वहन्तः शोभायात्रां कुर्युः। भवता च अहं विशेषतः सत्करणीयः'' इति।

केशवशर्मणः अहङ्कारद्योतकं वचनं श्रुत्वा राजा विक्रमार्कवर्मा खिन्नः कुपितः च। तथापि सः गाम्भीर्येण उक्तवान्– ''पण्डितवर्य! भवतः नियमाः अङ्गीक्रियन्ते मया। तान् त्रीन् प्रश्नान् पृच्छतु। अस्मद्देशीयेषु कश्चित् उत्तरं दास्यति'' इति।

केशवशर्मा तत्र उपविष्टवतः पण्डितान् उपेक्षया पश्यन् उक्तवान्– ''मम प्रथमः प्रश्नः– 'केनापि तिरस्कर्तुम् अनर्हं किञ्चन तथ्यम् अस्ति। तत् सर्वथा मिथ्या अपि। तादृशं तत् किम्?' इति। द्वितीयः प्रश्नः– 'अश्रूयमाणः शब्दः कः? अदृश्यमानं दृश्यं च किम्?' इति। तृतीयः प्रश्नः– 'आ कर्मकरात् आमहाराजं सर्वे केन वशीक्रियन्ते?' इति। एते मम प्रश्नाः'' इति।

केशवशर्मणः प्रश्नान् श्रुतवतां महताम् अपि पण्डितानां मुखानि कान्तिहीनानि जातानि। 'अत्रापि मम जयः निश्चितः' इति आलोच्य केशवशर्मा– ''उत्तरम् अद्यैव वक्तव्यम् इनि न नियमः। श्वः अपि वक्तुं शक्यते। तावत्पर्यन्तम् अहं विश्रान्तिसुखम् अनुभविष्यामि'' इति वदन् स्वस्य निमित्तं निर्दिष्टं वसतिगृहं गतवान्।

केशवशर्मणः निर्गमनस्य अनन्तरम् आस्थानपण्डिताः प्रश्नानां विषये चर्चाम् आरब्धवन्तः। प्रथमप्रश्नस्य उत्तरं तु तैः सर्वथा न ज्ञातम्। ''द्वितीयः प्रश्नः तर्कशास्त्रसम्बन्धी स्यात्। अश्रूयमाणः शब्दः आकाशः, अदृश्यमानं दृश्यं वायुः। आ कर्मकरात् आमहाराजं सर्वे व्याधिना मृत्युना वा वशीक्रियन्ते'' इति उक्तवन्तः ते।

किन्तु पण्डितानाम् उत्तरं श्रुत्वा राजा न तृप्तः। सः पण्डितान् उक्तवान्– ''केशवशर्मणः दुरहङ्कारः स्यात् नाम, किन्तु सः मेधावी इत्यत्र नास्ति सन्देहः। अतः तस्य प्रश्नाः विशिष्टार्थयुक्ताः स्युः। भवताम् उत्तरेण अहम् एव न तृप्तः। एवं स्थिते केशवशर्मा कथं वा तृप्तः भवेत्? पामराः

अपि प्रश्नानाम् उत्तराणि वक्तुम् अर्हन्ति इति कथयति सः। अतः शास्त्रदृष्टिं परित्यज्य बुद्धितीक्ष्णताम् आश्रित्य उत्तराणि चिन्तनीयानि। अतः एतद्विषये पुनरपि चिन्तयन्तु" इति। अनन्तरं सभां विसृज्य भारभूतमनस्कः सन् पुत्र्याः अन्तःपुरं गतवान् सः।

पितुः मुखस्य दर्शनात् एव श्रीललिता ज्ञातवती यत् पित्रा काऽपि गभीरा समस्या सम्मुखीक्रियमाणा अस्ति इति। "तात! का चिन्ता भवतः? किमर्थं मुखे म्लानता?" इति पितरं पृष्टवती सा।




विक्रमार्कवर्मा आस्थाने प्रवृत्तं निवेद्य– "परिस्थितिचिन्तनेन ज्ञायते यत् अस्माकं पराजयः निश्चितः इति। दुरहङ्कारिणः पुरतः पराजयाङ्गीकारः मम तु इष्टाय न। किन्तु विवशः अस्मि इदानीम्। किं करणीयम् इति न ज्ञायते। भवती अपि मेधाविनी एव। अतः एतेषां प्रश्नानाम् उत्तराणि भवती वक्तुं शक्नुयात् वा?" इति पृष्टवान्।

राजकुमारी श्रीललिता क्षणकालं चिन्तयित्वा पितरम् उक्तवती– "उत्तराणि वक्तुम् अहम् अपि न शक्नोमि" इति।

तदा विक्रमार्कवर्मा खेदेन उक्तवान्– "मेधाविनी भवती अपि उत्तराणि न जानाति? एवं तर्हि अस्माकं पराजयः निश्चितः। तस्य पण्डितस्य दुरहङ्कारः विना वचनं सोढव्यः अस्माभिः" इति।

तदा श्रीललिता मन्दहासपूर्वकम् उक्तवती– "तात! मया उत्तराणि न ज्ञायन्ते इति उक्तं, सत्यम्। किन्तु एतावता पराजयः अङ्गीकरणीयः एव इति तु न सिद्धम्। उत्तराणि अहं न जानीयां चेदपि तानि कथं ज्ञातुं शक्यन्ते इति मार्गम् अहं जानामि एव। अतः चिन्ता करणीया नास्ति भवता। अस्माकं प्रधानमन्त्रिणः पुत्रः राजशेखरः महामेधावी इति श्रूयते। तम् अत्र आनाय्य प्रश्नान् श्रावयतु। सः निश्चयेन उत्तराणि वदेत्" इति।

राजा विक्रमार्कवर्मा राजशेखरस्य आनयनार्थं दूतं प्रेषयित्वा महाराज्ञ्याः वैजयन्तीदेव्याः अन्तःपुरं गतवान्। आस्थाने



प्रवृत्तं समग्रं निवेद्य पुत्र्याः सह जातं वार्तालापम् अपि तां निवेदितवान् सः।

क्षणकालं चिन्तनं कृत्वा वैजयन्तीदेवी पृष्टवती– "उत्तराणि अहं न जानामि, राजशेखरम् आनाय्य पृच्छतु इति वदन्त्याः श्रीललितायाः मुखे कोऽपि चिन्ताभावः दृश्यते स्म वा?" इति।

"न। मन्दहासपूर्वकम् एव आसीत् सा। किन्तु एषः प्रश्नः किमर्थम् उद्भावितः भवत्या?" इति प्रतिप्रश्नं कृतवान् राजा विक्रमार्कवर्मा।

तदा वैजयन्तीदेवी हसन्ती उक्तवती– "अत्र काचित् पृष्ठभूमिका अस्ति। अतः एव एवं पृष्टं मया। श्रीललिता राजशेखरे अनुरक्ता इति मया श्रुतम्। राजशेखरः अपि श्रीललितायाम् अनुरागवान् इति श्रूयते। अतः एव श्रीललिता तेषां प्रश्नानाम् उत्तराणि जानती अपि न उक्तवती। सा उत्तराणि जानाति स्म इत्यतः तस्याः मुखे न चिन्ता, अपि तु मन्दहासः। मेधाविनः राजशेखरस्य मुखात् यदि भवान् योग्यानि उत्तराणि प्राप्नुयात् तर्हि तद्विषये भवान् सन्तुष्टः भवेत्। तदा तं जामातरम् अपि कुर्यात्। एतत् सर्वम् आलोच्य राजशेखरस्य मेधावित्वं परिचाययितुं श्रीललिता उपायं कृतवती स्यात् इति भाति मम" इति।

"स्यात् अपि एवम्। स्त्रीहृदयं स्त्री एव जानाति। किन्तु यदि एवं स्यात् तर्हि तदपि मम प्रियम् एव। सङ्कटपरिहारेण सह जामातृनिश्चयः अपि अद्य भवतु नाम" इति उक्त्वा ततः गतवान् विक्रमार्कवर्मा।

अल्पे एव काले राजशेखरः उपस्थितः। दृढकायः सुन्दरः तेजस्वी तरुणः सः। राजशेखरस्य एतादृशं वैशिष्ट्यम् इतः पूर्वं राज्ञा न लक्षितम् आसीत्। 'यदि एषः मेधावी अपि स्यात् तर्हि मम पुत्र्या स्थाने अनुरागः निक्षिप्तः इत्येव वक्तव्यम्' इति आलोचितवान् राजा।

राजशेखरम् आसने उपवेश्य राजास्थाने प्रवृत्तं विस्तरेण निवेदितवान् विक्रमार्कवर्मा। "केशवशर्मणा पृष्टानां प्रश्नानाम् उत्तराणि दातुं भवान् एव समर्थः इति श्रीललितायाः

आशयः'' इति हसन् उक्तवान् अपि।

राजशेखरः मन्दहासपूर्वकम् उक्तवान्– ''प्रभो, केशवशर्मा समीचीनान् प्रश्नान् पृष्टवान् अस्ति। जातस्य मरणं ध्रुवम् इति भवता अपि श्रुतम् एव। अतः मम मरणं नास्ति इति कोऽपि वक्तुं न अर्हति। मरणं ध्रुवम् इति सर्वैः अङ्गीकरणीयम् एव। किन्तु मरणं कस्यापि प्रियं न। एवं केनापि तिरस्कर्तुम् अनर्हं कटुसत्यं नाम– 'मरणं ध्रुवम्' इति वचनम्। किन्तु वेदान्तशास्त्रदृष्ट्या मरणादिकं पाञ्चभौतिकशरीरस्य, न तु आत्मनः। आत्मा अविनाशी। तस्य मरणम् एव नास्ति। अतः 'मरणं ध्रुवम्' इति वचनं मिथ्या अपि। एतत् एव प्रथमस्य प्रश्नस्य उत्तरम्'' इति।

''समीचीनम् उत्तरम् एतत्। द्वितीयस्य तृतीयस्य चापि प्रश्नस्य उत्तरम् अपि श्रावयतु तावत्'' इति सन्तोषेण उक्तवान् राजा।

''अस्माकं मनः तदा तदा विवेकम् उपदिशति। तदा मनस्तः मस्तिष्कपर्यन्तं वाक्यरूपः भावः प्रवहति। किन्तु तदन्तर्गताः शब्दाः केनापि न श्रूयन्ते। अतः अश्रूयमाणाः शब्दाः एते एव। एवम् एव मनःपटले दृश्यानि तदा तदा चित्रितानि भवन्ति। किन्तु तानि अन्यः द्रष्टुं न शक्नोति। तत् अनुभववेद्यम् इत्यतः तत् नास्ति इत्यपि वक्तुं न शक्नुमः। अतः एतत् अदृश्यमानं दृश्यम्'' इति




द्वितीयस्य प्रश्नस्य उत्तरम् उक्तवान् राजशेखरः।

विक्रमार्कवर्मा सन्तोषेण तृप्त्या च पार्श्वस्थायाः राज्ञ्याः मुखं दृष्टवान्। सा अपि सन्तोषं प्रकटयन्ती– ''तृतीयस्य उत्तरं वदतु तावत्'' इति उक्तवती।

''आ कर्मकरात् आमहाराजं सर्वे प्रशंसया वशीकृताः भवन्ति। एतस्य वचनस्य अपवादः एव नास्ति'' इति उक्तवान् राजशेखरः।

तदा विक्रमार्कवर्मा महान्तं सन्तोषं प्रकटयन्– ''साधु राजशेखर, साधु! समीचीनानि उत्तराणि उक्तानि भवता। भवतः बुद्धिमत्तायाः परीक्षार्थम् अपरः प्रश्नः मम। भवता अदृश्यमानं मया च दृश्यमानं

दृश्यं किं तत्?" इति पृष्टवान्।

राजशेखरः हसन् उक्तवान्– "प्रभो भवता अन्यथा गृहीतम्। भवता यत् दृश्यं दृश्यते तत् मया अपि दृश्यते एव" इति।

राजा आश्चर्येण पृष्टवान्– "भवता अपि दृश्यते? तर्हि किं तत् दृश्यम्?" इति।

राजशेखरः अल्पां लज्जाम् अनुभवन् उक्तवान्– "पुत्री श्रीललिता मम कण्ठे मालाम् अर्पयन्ती दृष्टा भवता। मया अपि तदेव दृश्यं दृष्टम्" इति।

तदा विक्रमार्कवर्मा कोपं प्रदर्शयन्– "अये उद्धत! केनचित् दुरहङ्कारिणा पृष्टानां प्रश्नानाम् उत्तराणि भवता उक्तानि, सत्यम्। तावता अहं मम पुत्रीं भवते दास्यामि इति भावितवान् वा भवान्?" इति पृष्टवान्।

राजशेखरः तु मन्दहासपूर्वकम् एव उक्तवान्– "यदि तादृशः आशयः भवतः न स्यात् तर्हि भवान् अवदिष्यत्– 'साधु, केशवशर्मणः पुरतः कथनात्, भवता उक्तानाम् उत्तराणां समीचीनत्वम् असमीचीनत्वं वा ज्ञायते' इति। किन्तु भवता तथा न कृतम्। मां प्रशंसन् भवान् मम परीक्षार्थम् अन्यं प्रश्नं पृष्टवान्। एतावता एव मया भवतः आशयः ज्ञातः" इति।

एतत् श्रुत्वा सन्तुष्टः विक्रमार्कवर्मा राजशेखरं दृढम् आलिङ्ग्य– "भवतः चिन्तनरीतिः असदृशी। अहं यत् वदामि तत् सत्यम् इत्येषः आत्मविश्वासः अपि श्लाघ्यः। श्रीललितायै योग्यः वरः भवान्। आवाभ्यां दृष्टं दृश्यं सर्वे यथा द्रष्टुं शक्नुयुः तथा करिष्यामि" इति।

तस्मिन् दिने सायङ्काले एव पुनः सभा प्रवृत्ता। सभायां राजशेखरेण उक्तानि उत्तराणि श्रुत्वा 'एतानि युक्तानि उत्तराणि' इति अङ्गीकृत्य केशवशर्मा स्वेन सम्पादितान् बिरुदान् राजशेखराय समर्प्य शिरः अवनमय्य ततः निर्गतवान्।

पुनः अल्पे एव काले गुरुजनैः निश्चिते शुभे मुहूर्ते राजशेखरस्य कण्ठे मालाम् अर्पितवती श्रीललिता।





# लुण्ठाकः युवराजः

## १६

(वीरसिंहस्य आज्ञायाः अनुगुणं सर्वदमनः शङ्करवर्मतः सुवर्णमयं कनकदुर्गाविग्रहं स्वायत्तीकृत्य नदीमार्गेण शान्तिपुरं प्रति प्रस्थितवान्। तदा युवराजः सन्दीपकुमारः मध्येमार्गम् उपायेन विग्रहं वशीकृत्य शङ्करवर्मणे समर्पितवान्। ऐदम्प्राथम्येन सन्दीपकुमारं दृष्टवतः शङ्करवर्मणः महान् सन्तोषः। शङ्करवर्मणः दर्शनात् सन्दीपकुमारः अपि सन्तुष्टः। तदनन्तरम्......।)

कनकदुर्गाविग्रहः लब्धः अपि हस्तच्युतः अभवत् इति ज्ञात्वा वीरसिंहः क्षणकालं चिन्तामग्नः जातः। क्रमशः तस्य मुखे उग्रता दृष्टा। मुष्टी बद्धे जाते। "हुँ। स्यात् नाम माया, मान्त्रिकशक्तिः वा। किन्तु अहं तूष्णीं न तिष्ठामि। अस्ति च महती सेना। सन्ति च बहवः सेनानायकाः। अग्रे गच्छामि एव अहम्" इति उच्चैः उक्तवान् वीरसिंहः।

वीरसिंहस्य मौनात् भीतः आसीत् सर्वदमनः। राज्ञः मुखात् वचनं निर्गतम् इत्यतः वक्तुं धैर्यं प्राप्तं तेन। सः शिरः उन्नमय्य उक्तवान्– "महाप्रभो, अस्माकं प्रबलं सैन्यम् अस्ति इति तु सत्यम् एव। तथापि मानवातीतशक्तेः उपेक्षा उचिता न स्यात्। मानवातीतशक्तिं सम्मुखीकर्तुं न शक्यते इति अस्माभिः अनुभवबलात् ज्ञातम्



अस्ति। अतः विचिन्त्य अग्रे पदं स्थापनीयम् इति मम निवेदनम्'' इति।

किञ्चित् चिन्तयित्वा वीरसिंहः उक्तवान्– ''इदानीं परिस्थितिः विलक्षणा स्यात् नाम। किन्तु निष्क्रियं तिष्ठामः चेत् उपहासपात्राणि भविष्यामः। उपहासः मरणसमानः। नष्टस्य कनकदुर्गाविग्रहस्य अन्वेषणार्थं प्रयत्नः न कृतः चेत् स्वस्य असामर्थ्यं स्वयम् अङ्गीकृतं भविष्यति। सेनापतिः भवान् एवं भीरुताम् उपदिशति खलु? किं लज्जा न अनुभूयते? निर्वेदः कापुरुषलक्षणम्। वीरलक्षणं तु शौर्यम्। भवान् शूरः इति मत्वा मया भवते सेनापतिपदवी दत्ता। स्मरतु एतत्'' इति।

तावता कश्चन गूढचरः अन्तः प्रविश्य वीरसिंहं विनयेन नमस्कृत्य– ''प्रभो, अस्माकं सैनिकानां हस्तात् च्युतः कनकदुर्गाविग्रहः इदानीं शङ्करवर्मणः राज्ये एव अस्ति। नूतनतया निर्मिते मन्दिरे श्वः स च विग्रहः प्रतिष्ठाप्यते। महान् सन्नाहः क्रियमाणः अस्ति तत्र'' इति निवेदितवान्।

''सत्यं वा एतत्?'' इति महता आश्चर्येण पृष्टवान् वीरसिंहः।

''सत्यं श्रीमन्! अहं प्रत्यक्षं दृष्ट्वा आगत्य निवेदयन् अस्मि'' इति उक्तवान् गूढचरः।

तदा वीरसिंहः झटिति आसनात् उत्थाय– ''एवं तर्हि शङ्करवर्मणा नियोजितः कश्चन मान्त्रिकः एव विग्रहं लुण्ठितवान् इति निश्चितम् अभवत्। अल्पस्य कस्यचित् मान्त्रिकस्य साहाय्यात् दृप्तः शङ्करवर्मा मद्विरुद्धं व्यवहृतवान्। एतस्य परिणामः कः इति आजीवनं सः यथा स्मरेत् तथा करिष्यामि। मां वीरसिंहं सः इतोऽपि सम्यक् न जानाति इति मन्ये'' इति कोपेन गर्जितवान्।

''प्रभो, अहं तं विग्रहम् आनीय अर्पयिष्यामि। अनुज्ञादानेन अनुग्रहीतव्यः अहम्'' इति निवेदितवान् सर्वदमनः।

''विग्रहम् अन्यस्य अधीनं कुर्वता स्वस्य सामर्थ्यं स्वयं प्रमाणीकृतं भवता। एतावता अलम्। अतः एतस्मिन् सन्दर्भे अहम् एव युद्धार्थं गमिष्यामि। वीरैः कैश्चित् समर्थैः

भटैः सह भवान् माम् अनुसरतु। केनचित् वा उपायेन विग्रहः वशीकरणीयः एव। मान्त्रिकप्रभावः पराजेतव्यः। सर्वे सन्नद्धाः भवन्तु" इति आज्ञापितवान् वीरसिंहः।

* * * *

जयपुर्यां सन्तोषतरङ्गाः सर्वत्र प्रसृताः दृश्यन्ते। 'कनकदुर्गाविग्रहः सन्दीपकुमारेण आनीय दत्तः' इत्येषः विषयः गोपितः आसीत् शङ्करवर्मणा। अतः जनाः परस्परं वदन्ति स्म यत् कयाचित् अपूर्वघटनया विग्रहः पुनः प्राप्तः इति। विग्रहः पुनः प्राप्तः इत्यतः तेषां दैवीभक्तिः पराकाष्ठां गता। नूतनस्य आलयस्य अलङ्करणे आबालवृद्धं सर्वे उत्साहेन प्रवृत्ताः आसन्।

युवराज्ञी सुकन्या तु विग्रहस्य पार्श्वे एव सदा उपविशति। जनाः अहमहमिकया आगत्य विग्रहस्य दर्शनं प्राप्य प्रतिगच्छन्ति।

विग्रहप्रतिष्ठापनार्थं ज्योतिषिकैः निश्चितः मुहूर्तः आसन्नः। निरन्तरं मङ्गलवाद्यध्वनिः श्रूयते। शङ्करवर्मा, सुकन्या, दैवज्ञाः च शुचिर्भूय राजभवनस्थं विग्रहं मन्दिरं प्रति नयन्तः आसन्। जनाः भक्त्या महता सन्तोषेण च तान् अनुसरन्ति।

"अलम् उत्सवाचरणेन" इति कश्चन कठोरध्वनिः उद्गतः। अश्वम् आरुह्य आगतान् अपरिचितान् सैनिकान् दृष्ट्वा वाद्यवादकाः भीत्या स्वकार्यं स्थगितवन्तः। तदानीं वीरसिंहेन पुनः गर्जनं कृतम्– "अलम् उत्सवाचरणेन" इति।



वाद्यध्वनिस्थगनात् आश्चर्यचकिताः जनाः वीरसिंहस्य ध्वनिं श्रुत्वा नितरां भीताः। कुतूहलेन मौनं स्थितवन्तः ते।

वीरसिंहः अश्वं किञ्चित् अग्रे आनीय उक्तवान्– "अये शङ्करवर्मन्! युद्धं भवतः प्रियं न इति भावयामः वयम्। यदि युद्धं मरणं च इष्यते तर्हि अग्रे आगच्छतु" इति।

"मरणात् न मम भीतिः। किन्तु शान्तिप्रियः अहं कदापि केनचित् सह अपि युद्धं न इच्छामि। विना कारणम् अस्मादृशानां पीडनं न शोभते इति ज्ञापयितुम् इच्छामि अहम्" इति उक्तवान् शङ्करवर्मा।

"भवान् पीडनीयः एव इति मम आशयः न। यदि विग्रहः मह्यम् अर्प्येत तर्हि न काऽपि



पीडा भवेत्'' इति उक्तवान् वीरसिंहः।

''तत् तु सर्वथा न शक्यते'' इति क्रोधयुक्तेन स्वरेण उक्तवती सुकन्या।

विग्रहं दृढम् आलिङ्ग्य स्थितां, कान्तिमतीं, परमसुन्दरीं तां पश्यन् आश्चर्येण पृष्टवान् वीरसिंहः– ''का एषा?'' इति।

''एषा मम अद्वितीया पुत्री सुकन्या। विग्रहे महती प्रीतिः एतस्याः'' इति उक्तवान् शङ्करवर्मा।

''एतादृशी अप्सरस्सदृशी सुन्दरी पुत्री भवतः अस्ति इति न ज्ञातम् एव आसीत् मया'' इति वदन् अश्वात् अवतीर्णवान् वीरसिंहः। शङ्करवर्मणः समीपम् आगत्य मन्दहासपूर्वकम् उक्तवान् सः-- ''यदि मम काचित् इच्छा भवता पूर्येत तर्हि अहं कनकदुर्गाविग्रहम् अत्रैव परित्यज्य गच्छेयम्'' इति।

''का सा इच्छा पूरणीया मया?'' इति पृष्टवान् शङ्करवर्मा।

''एषा सुवर्णपुत्थलिका भवतः पुत्री सुकन्या मह्यम् अर्पणीया'' इति हसन् उक्तवान् वीरसिंहः।

''अये, किं वदन् अस्ति भवान्?'' इति क्रोधेन पृष्टवान् शङ्करवर्मा।

''कोपः मास्तु। शान्ततया चिन्तयित्वा वदतु। यदि एषा मां परिणयेत् तर्हि सुमेधराज्यस्य साम्राज्ञी भवेत्। साम्राज्ञीत्वप्राप्तिः न सुलभा। राज्ञः मम श्वशुरः भविष्यन् भवान् अपि गौरवं प्राप्स्यति'' इति उक्तवान् वीरसिंहः।

''अये वीरसिंह!'' इति परमक्रोधेन वीरसिंहं दृष्टवान् शङ्करवर्मा।

''मां नाम्ना सम्बोधयति वा भवान्? अहं महाराजः अस्मि, भवान् च सामन्तराजः। एतत् स्मरतु प्रथमम्। अनौचित्येन व्यवहारः विपत्तये भवेत्'' इति गाम्भीर्येण उक्तवान् वीरसिंहः।

''दौर्जन्यस्यापि काचित् सीमा स्यात्। भवान् उच्छृङ्खलं व्यवहरन् अस्ति'' इति उक्तवान् शङ्करवर्मा।

''मम व्यवहारः कीदृशः इति निर्णायकः न भवान्। सामन्तः भवान् मदधीनः। अतः

भवतः पुत्री अपि मदधीना एव। एवं स्थिते बलात् यदि अहं भवतः पुत्रीं नयेयं तर्हि न तत्र दोषः। अहं तु सौजन्येन सूचयन् अस्मि– 'पुत्रीं मह्यम् अर्पयतु' इति। सूचनापालनं मदधीनस्य भवतः कर्तव्यम्'' इति उक्तवान् वीरसिंहः।

''धिक् सौजन्यं भवतः। आत्मगौरवं सर्वप्रधानं भावयामि अहम्। तदर्थं सर्वस्वं नष्टं भवेत् चेदपि अहं चिन्तां न करोमि'' इति उक्तवान् शङ्करवर्मा।

''अये, मन्दमतिः इव मा व्यवहरतु। गृहम् उपस्थितां लक्ष्मीं तिरस्करोति वा भवान्? महाराजाय मह्यं पुत्री दत्ता चेत् भवतः गौरवम् अधिकारः च वर्धते। अन्यथा कुलदेवताविग्रहः हस्तच्युतः स्यात्, पुत्री अपि हस्तच्युता भवेत्, राज्यं च मदधीनं स्यात्। विना कारणं रक्तपातः अपि स्यात्। अन्ते भवतः पराजयः कारागारवासः च निश्चितः एव'' इति दृढस्वरेण उक्तवान् वीरसिंहः।

''तात! एतस्य प्रार्थनाम् अङ्गीकरोतु भवान्! यदि विग्रहः अत्रैव तिष्ठेत् तर्हि अहम् एतेन सह गन्तुं सिद्धा एव'' इति उक्तवती सुकन्या।

''अलं साहसवचनेन। पुत्रि! विग्रह-रक्षणनिमित्तं भवतीम् अपायाग्नौ पातयितुं न इच्छामि अहम्'' इति उद्वेगेन उक्तवान् शङ्करवर्मा।

''साधु सुन्दरि! योग्यः निर्णयः भवत्याः।



अपूर्वं साम्राज्ञीपदं भवत्याः इष्टं यत् तत्र न किञ्चित् आश्चर्यम्। पूर्वजन्मनः पुण्यस्य बलात् एव मादृशस्य पाणिग्रहणं शक्यं, न अन्यथा'' इति हसन् उक्तवान् वीरसिंहः।

''यावत् अहं जीवामि तावत् एषः विवाहः कदापि न भविष्यति'' इति सुदृढम् उक्तवान् शङ्करवर्मा।

तावता वणिग्वेषधारी कश्चन युवकः सुकन्यायाः समीपम् आगत्य तस्याः हस्ते किमपि समर्प्य ''शुभाशंसनार्थम् आगतः अहम्'' इति वदन् हसन् शङ्करवर्माणं दृष्टवान्। 'वणिग्वेषेण आगतः युवराजः सन्दीपकुमारः' इति ज्ञातवतः शङ्करवर्मणः हृदये आशाकिरणः उदितः।

''वत्से, सम्यक् आलोच्य मनःपूर्वकं



वदन्ती अस्ति वा भवती?" इति पृष्टवान् शङ्करवर्मा।

"पूर्वापरं समग्रम् आलोच्य एव वदन्ती अस्मि अहम्। वृथा सन्देहः मास्तु भवतः। अपूर्वः विग्रहः अस्माकं राज्ये एव तिष्ठेत् इति मम अपेक्षा। एतदर्थम् अल्पः त्यागः करणीयः भवति यत् तत् मम प्रियम् एव। अन्यच्च कन्या सदापि परकीया एव। अग्रे यत् भवितव्यम् आसीत् तत् इदानीं जायमानम् अस्ति। एतस्य परिणयात् साम्राज्ञीपदवी लभ्यते यत् तत् मम सौभाग्यम्। एवम् एकेन एव प्रयत्नेन विग्रहरक्षणं, साम्राज्ञीपदप्राप्तिः चेति फलद्वयं सिध्यति" इति उक्तवती सुकन्या।

"साधु सुन्दरि! विवेकिनी भवती। मम हृदयसाम्राज्यलक्ष्मीः च" इति आनन्देन उक्तवान् वीरसिंहः।

"दैवाधीनं जगत् सर्वम्। विधिविलासं को वा उल्लङ्घयितुम् अर्हति?" इति स्वगतम् उक्तवान् शङ्करवर्मा।

वीरसिंहेन सह सुकन्यायाः प्रेषणार्थं सन्नाहः आरब्धः। अलङ्कृतः गजः आनीतः। वस्त्रैः आभरणैः च सुकन्या अपि अलङ्कृता। गजस्य उपरि वरण्डकः स्थापितः। तत्र सुकन्या उपवेशिता। गजस्य पुरतः वीरसिंहः सर्वदमनः च गर्वेण गच्छतः। सैनिकाः सर्वे गजम् अनुसरन्ति। "अचिरात् एव विवाहमुहूर्तं निश्चित्य वार्तां प्रेषयिष्यामि। कन्यादानार्थम् आगन्तव्यं भवता" इति शङ्करवर्माणम् उक्तवान् वीरसिंहः।

यदा अरण्यसमीपम् आगतं तदा जयानन्दमुनेः शुकी मल्लिका उड्डीय आगत्य एकं पत्रं सुकन्यायाः उत्सङ्गे पातयित्वा आगच्छत्। एषा अल्पा घटना केनापि न लक्षिता। पत्रं पठित्वा सुकन्या आप्तसखीं मन्दस्वरेण किमपि उक्त्वा संज्ञाराहित्यम् अभिनयन्ती सख्याः उपरि पतितवती।

"स्थगयन्तु, स्थगयन्तु यात्राम्" इति उच्चस्वरेण उक्तवती सखी। सर्वे गमनं स्थगितवन्तः।

"युवराज्ञी मूर्च्छां गता अस्ति। एताम् अवतारयन्तु। वैद्यम् अविलम्बेन आनयन्तु च" इति उद्वेगेन उक्तवती सा सखी।

तत्क्षणे एव सुकन्या गजात् अवतारिता। झटिति तत्र शिबिरम् एकं निर्मितम्। तस्य अन्तः सुकन्या शायिता। कश्चन भटः धावन् गत्वा जयपुरीतः वैद्यम् आनीतवान्। द्वाभ्याम् अनुयायिभ्यां सह आगतः वैद्यः शिबिरं प्रविश्य अल्पे एव काले प्रत्यागत्य– "अल्पे एव काले युवराज्ञी सचेतना भविष्यति। श्रान्तिकारणतः एवं जातं, तावदेव। गजस्य उपरि उपविश्य प्रयाणं श्रमदायकम्। अतः शिबिकायाम् उपवेश्य नयनं वरम्" इति सूचयित्वा ततः प्रत्यागतवान्।

जयपुरीतः शिबिका आनायिता। तावता सायङ्कालः जातः आसीत्। वीरसिंहः सुकन्यायाः सखीम् आहूय पृष्टवान्– "युवराज्ञी प्रयाणार्थं सिद्धा वा?" इति।

"प्रभो, एतादृशेषु विषयेषु प्रिया प्रियकरेण स्वयं प्रष्टव्या। अन्तः गत्वा भवान् एव तां पृच्छतु" इति हसन्ती उक्तवती सा सखी।

"आम् आम्। एतादृशं कार्यं ममापि प्रियम् एव। मधुरैः वचनैः कुसुमकोमलायाः श्रमम् अपनेष्यामि" इति वदन् शिबिरप्रकोष्ठं प्रविष्टवान् वीरसिंहः। "प्रिये! युवराज्ञि!" इति द्विवारम् आहूतवान्। न काऽपि प्रतिक्रिया तत्र। वीरसिंहः शय्यायाः समीपं गतवान्। आच्छादकस्य अन्तः पार्श्वे अल्पं स्पन्दनं दृष्टम्। अत्र युवराज्ञ्याः हस्तः अस्ति इति भावयन् सः तं भागं स्पृष्टवान्।

तावता आच्छादकम् अपसार्य कश्चन कपिः वीरसिंहस्य उपरि आक्रमणं कृत्वा नखैः वीरसिंहमुखे व्रणानि उत्पाद्य शिबिरतः बहिः आगत्य कुत्रापि अधावत्।

एतया अवितर्कितया घटनया वीरसिंहः क्षणकालं स्तब्धः। 'अत्र कपिः कथम् आगतः? अत्रापि मन्त्रप्रयोगः! युवराज्ञी कपिरूपेण परिवर्तिता मान्त्रिकेण। एवं तर्हि समर्थस्य मान्त्रिकस्य साहाय्येन कपिः पुनः युवराज्ञी कर्तुं शक्यः' इति आलोच्य वीरसिंहः– "गृह्णन्तु, गृह्णन्तु, तं कपिं मा त्यजन्तु, त्वरया गृह्णन्तु" इति उच्चैः वदन् शिबिरात् बहिः आगतवान्। –(अनुवर्तते)






# कीर्तिचन्द्रिकानिर्णयः

कथाकथनकार्ये नियुक्तः इव व्यवहरन्तं, आश्रयस्य वृक्षस्य सम्बन्धं कदापि अत्यजन्तं वेतालं वशीकर्तुम् इच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "यत् करणीयम् इति चिन्तितं तत् साधनीयम् एव इति चिन्तयतः भवतः धारणा तु श्लाघनार्हा एव। किन्तु कदाचित् दृढाः अपि केनचित् कारणेन स्वधारणां परिवर्तयन्ति। पूर्वं कीर्तिचन्द्रिका नाम राजकुमारी एवम् एव कृतवती। स्त्रिया तया यथा कृतं तथा पुरुषः अपि कुर्यात् कदाचित्। अतः तस्याः कथा श्रुता चेत् भवतः लाभः एव स्यात्। कथाश्रवणतः मार्गायासपरिहारः तु भवति एव। अतः कथां श्रद्धया शृणोतु तावत्" इति।

## वेतालकथा



अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं विश्वकान्तः नाम राजा स्वर्णपुरराज्यं पालयन् आसीत्। सः अजातशत्रुः। विश्वकान्तस्य एतस्य मैत्रीभावस्य कारणतः तस्य मित्राणि अधिकानि। एतादृशेषु मित्रेषु सुगन्धपुरस्य राजा सूर्यकेतुः अपि अन्यतमः।

विश्वकान्तस्य एकमात्रपुत्रः चन्द्रगुप्तः। यदा सः प्राप्तवयस्कः जातः तदा सद्गुणशाली पराक्रमशाली चेति तेन कीर्तिः प्राप्ता आसीत्। बहवः राजानः तं स्वजामातरं कर्तुम् इच्छन्ति स्म। सुगन्धपुरस्य राजा सूर्यकेतुः इच्छति स्म यत् पुत्री कीर्तिचन्द्रिका चन्द्रगुप्ताय दातव्या इति। 'आत्मीयः विश्वकान्तः मम अपेक्षां न निराकुर्यात्' इति भावयति स्म सः। अल्पे एव काले तेन काचित् वार्ता प्राप्ता– 'कीर्तिचन्द्रिका चन्द्रगुप्ते अनुरक्ता' इति।

'अहं यत् इच्छामि तत्र दैवम् अपि अनुकूलकरम्' इति भावयन् सूर्यकेतुः विश्वकान्तं दृष्ट्वा निवेदितवान्– "मित्र! अहं भवतः पुत्रं सम्यक् जानामि। भवान् अपि मम पुत्रीं सम्यक् जानाति एव। मम पुत्री भवता स्नुषात्वेन अङ्गीकरणीया। आवयोः मैत्री बन्धुत्वं प्राप्नुयात् इति मम इच्छा" इति।

एषः प्रस्तावः विश्वकान्ताय अपि अरोचत। सः झटिति दूतान् आदिष्टवान्– 'पुत्रं चन्द्रगुप्तम् अत्र आनयन्तु" इति।

पितुः मुखात् सर्वं श्रुत्वा उक्तवान् चन्द्रगुप्तः– "तात! क्षन्तव्यः अहम्। सागरदेशस्य युवराज्ञ्यां मनोज्ञमालायां मम दृढानुरागः। अतः ताम् एव परिणेतुम् इच्छामि अहम्" इति।

तदा विश्वकान्तः क्षणकालस्य मौनस्य अनन्तरम् उक्तवान्– "मित्र! विवाहस्य परिणामः आजीवनं स्थास्यति। अतः एतद्विषये अभिप्रायारोपणं कदापि न भवेत्। आवां तु बन्धुत्वम् इष्टवन्तौ। किन्तु दैवलीला अन्या एव इति भाति मम" इति।

सूर्यकेतुः चन्द्रगुप्तम् उक्तवान्– "चन्द्रगुप्त! मम पुत्री भवति नितराम् अनुरक्ता अस्ति। अतः तां मा निराकरोतु

कृपया" इति।

चन्द्रगुप्तः तु कीर्तिचन्द्रिकायाः परिणयं सर्वथा न अङ्गीकृतवान्।

तदा सूर्यकेतुः विश्वकान्तम् उक्तवान्– "चन्द्रगुप्तस्य लोकानुभवः न्यूनः। अतः भावपरवशः सन् किमपि वदन् अस्ति। भवान् वा तं हितं बोधयन् विवाहम् अङ्गीकारयतु" इति।

"विवाहस्य विषये बलात्कारः न उचितः। अतः पुत्रः यत् निर्णेष्यति तत् अनुमतं मम" इति उक्तवान् विश्वकान्तः।

"एवं तर्हि चन्द्रगुप्तः मनोज्ञमालां मम पुत्रीं चापि परिणयतु। राजानः बहुवल्लभाः इति श्रूयते। क्षत्रियस्य बहुपत्नीत्वं धर्मशास्त्रविरुद्धं तु न" इति उक्तवान् सूर्यकेतुः।

तदा चन्द्रगुप्तः मध्ये उक्तवान्– "क्षत्रियाणां बहुपत्नीत्वं धर्मशास्त्रसम्मतं स्यात् नाम। किन्तु अस्माकं वंशे सर्वे एकपत्नीव्रतस्थाः। वंशानुक्रमस्य भङ्गम् अहं न इच्छामि" इति।

'स्वस्य प्रयत्नः सर्वथा विफलः' इति ज्ञातवतः सूर्यकेतोः महान् कोपः आगतः। "मया उपस्थापितः विवाहप्रस्तावः निराकृतः चेत् घोरः परिणामः सम्मुखीकरणीयः स्यात्। अतः विचिन्त्य अन्तिमनिर्णयं श्रावयन्तु" इति उक्त्वा सूर्यकेतुः रथम् आरुह्य स्वराजधानीं प्रतिगतवान्।




ततः अष्टदिनाभ्यन्तरे सूर्यकेतुः स्वर्णपुरस्य आक्रमणार्थं प्रस्थितवान्। मित्रस्य एतादृशं व्यवहारं दृष्टवतः विश्वकान्तस्य महान् खेदः। किन्तु युद्धं तु अनिवार्यम्। अतः सः 'युद्धार्थं त्वरया सन्नाहः करणीयः' इति सेनापतिम् आदिष्टवान्।

युद्धभूमिं प्रति गन्तुम् उद्युक्तं पितरम् उक्तवान् चन्द्रगुप्तः– "तात! मत्कारणतः एतत् युद्धम् आपतितम्। अतः सूर्यकेतुम् अहम् एव सम्मुखीकरिष्यामि। मम पराक्रमः कीदृशः इति सः,अन्ये राजानः च जानन्तु" इति।

कीर्तिचन्द्रिकया अपि आक्रमणवार्ता श्रुता। पित्रा आक्रमणं यत् उद्घुष्टं तत् तया

अनुमतं न आसीत्। 'अल्पस्य विवाहस्य निमित्तं पक्षद्वये अपि असङ्ख्यानां सैनिकानां मरणं भविष्यति' इति चिन्तयन्त्याः तस्याः महान् आतङ्कः।

दीर्घकालस्य चिन्तनस्य अनन्तरं कीर्तिचन्द्रिकायाः मनसि कश्चन विचारः आगतः– 'सर्वविधविद्यासु, तत्रापि खड्गयुद्धे, मम प्रावीण्यम् अस्ति। अतः केवलं मम चन्द्रगुप्तस्य च मध्ये युद्धं प्रचलेत्। यदि अहं पराजिता भवेयं तर्हि मया, मनोज्ञमालिकां चन्द्रगुप्तः यथा परिणयेत् तथा व्यवस्था करणीया। यदि चन्द्रगुप्तस्य पराजयः स्यात् तर्हि सः मां परिणयेत्। एवं युद्धनियमः निश्चेतव्यः' इति।

किन्तु पुनः सन्देहः– 'महावीरं चन्द्रगुप्तम् अहं खड्गयुद्धे पराजेतुं शक्नुयां वा?' इति। तदा तया पूर्वं राजगुरुणा उक्तं वचनं स्मृतम्।

राजगुरुणा उक्तम् आसीत्– "समीपे दक्षकारण्ये नीलाम्बरः नाम मुनिः निवसति। सः तपोनिरतः। यदि न्यायमार्गानुयायी कश्चित् तं प्रार्थयेत् तर्हि सः वरेण अनुग्रहीष्यति" इति।

एतं विषयं स्मरन्ती कीर्तिचन्द्रिका अश्वम् आरुह्य अरण्यं प्रति गतवती। नीलाम्बरमुनेः आश्रमं प्राप्तवती च। मुनिं विनयेन नमस्कृत्य स्वस्य विचारं समग्रं निवेदितवती।

सर्वं श्रुत्वा क्षणकालस्य मौनस्य अनन्तरं मुनीश्वरः– "वत्से, खड्गसिद्धिमन्त्रम् उपदिशामि। एतस्य परिणामतः भवत्याः



प्रतिस्पर्धी महाचतुरः सन् अपि अल्पे एव काले पराजयं प्राप्स्यति" इति उक्त्वा मन्त्रम् उपदिष्टवान्।

कीर्तिचन्द्रिका कृतज्ञतावचनानि उक्त्वा राजधानीं प्रत्यागतवती।

अनन्तरं पितरं दृष्ट्वा स्वस्य विचारं वरप्राप्तिवार्तां च निवेदितवती। तदा सन्तुष्टः सूर्यकेतुः– "वत्से, युक्तं कृतं भवत्या। खड्गयुद्धे पराजितः भविष्यति चन्द्रगुप्तः। भवते एव राज्यं समर्प्यते इत्यपि वदाम वयम्। तदा सः निश्चयेन भवतीं परिणेतुं सिद्धः भवेत्" इति उक्तवान्।

अनन्तरं सूर्यकेतुः दूतद्वारा विश्वकान्ताय पत्रं प्रेषितवान्। पत्रे लिखितम् आसीत्– "युद्धव्याजेन असङ्ख्यानां जनानां मारणं न उचितम् इति अहम् अपि अङ्गीकरोमि। अतः मत्पक्षीयेन केनचित् वीरेण सह भवतः पुत्रः चन्द्रगुप्तः खड्गयुद्धं करोतु। एतस्मिन् युद्धे मत्पक्षीयस्य पराजयः चेत् मद्राज्यं भवदधीनं भविष्यति। चन्द्रगुप्तः पराजितः चेत् भवद्राज्यं मदधीनं स्यात्" इति।

राजा विश्वकान्तः एतं प्रस्तावम् अङ्गीकृतवान्। अनन्तरं पुरुषवेषेण स्थितायाः कीर्तिचन्द्रिकायाः चन्द्रगुप्तस्य च मध्ये खड्गयुद्धम् आरब्धम्।

किञ्चित्कालम् उभयोः अपि समप्राबल्यं दृष्टम्। चन्द्रगुप्तेन क्रियमाणात् खड्गप्रहारात् आत्मनः रक्षणे कदाचित् क्लेशम् अनुभवति कीर्तिचन्द्रिका। अन्ते सा मुनीन्द्रेण उपदिष्टं खड्गसिद्धिमन्त्रं





जपितवती। पुनः अल्पे एव काले मायया इव चन्द्रगुप्तस्य खड्गः अधः पतितः। एतत् कथं जातम् इति सर्वथा न ज्ञातं चन्द्रगुप्तेन।

सूर्यकेतुः पराजितं चन्द्रगुप्तं बद्ध्वा स्वराज्यं नीतवान्। अनन्तरदिने तम् उक्तवान् सः– ''कुमार! अन्तिमः अवकाशः दीयते भवते। पुरुषवेषधारिणी मम पुत्री एव भवन्तं पराजितवती। भवान् यदि मम जामातृत्वम् अङ्गीकुर्यात् तर्हि मद्राज्यं भवद्राज्यं चापि भवदधीनं भविष्यति'' इति।

तदा चन्द्रगुप्तः विनयेन एव उक्तवान्– ''महाराज, क्षन्तव्यः अहम्। विवाहविषये मम निर्णयः श्रावितः मया। स च दृढः एव। तत्र परिवर्तनं किमपि न भविष्यति'' इति।

पितुः द्वारा चन्द्रगुप्तस्य निर्णयं श्रुतवत्याः कीर्तिचन्द्रिकायाः महान् खेदः।

'सूर्यकेतुः चन्द्रगुप्तं बद्ध्वा नीतवान्' इति वार्ता मनोज्ञमालायाः पित्रा सोमवर्मणा अपि श्रुता। क्रुद्धः सः सूर्यकेतोः राज्यस्य उपरि आक्रमणार्थम् उद्युक्तः।

एतत् सूर्यकेतुना अपि श्रुतम्। सः पुत्रीम् उक्तवान्– ''वत्से! सोमवर्मणः आक्रमणस्य विषये चिन्ता मास्तु भवत्याः। तस्य सेना अल्पा। अस्माकं सेना च महती। अतः अल्पेन एव प्रयासेन सोमवर्मा जेतुं शक्यः'' इति।

दीर्घालोचनं कृत्वा कीर्तिचन्द्रिका पितरम् उक्तवती– ''तात! अहम् इदानीं मम विचारं परिवर्तितवती अस्मि। चन्द्रगुप्त–मनोज्ञमालयोः विवाहम् अहम् एव निर्वर्तयिष्यामि। विचिन्त्य एतादृशः निर्णयः स्वीकृतः मया। अतः भवान् अत्र प्रतिरोधं मा करोतु कृपया'' इति।

कीर्तिचन्द्रिकायाः आशयः अनिवार्यतया अङ्गीकृतः सूर्यकेतुना। सः दूतद्वारा विश्वकान्ताय वार्तां प्रेषितवान्– ''मित्र! कीर्तिचन्द्रिका चन्द्रगुप्तं जितवती यत् तत्र मन्त्रशक्तिः कारणं, न तु तस्याः आत्मशक्तिः। अतः भवतः पुत्रेण पराजयः अङ्गीकरणीयः नास्ति। भवदीयं राज्यं भवदधीनम् एव भविष्यति। मया किञ्चित् औद्धत्यं प्रदर्शितम्। तदर्थम् अहं क्षन्तव्यः'' इति।

अनन्तरं मनोज्ञमाला-चन्द्रगुप्तयोः विवाहः कीर्तिचन्द्रिकायाः उपस्थितौ सवैभवं प्रवृत्तः।

एवं कथां समाप्य वेतालः पुनः अवदत्– "राजन्! कीर्तिचन्द्रिका चन्दगुप्ते दृढानुरागवती आसीत् इति तु सुस्पष्टम्। चन्द्रगुप्तः तस्याः अनुरागम् उपेक्षितवान्। कीर्तिचन्द्रिका तु मुनेः अनुग्रहेण खड्गसिद्धिमन्त्रं प्राप्य चन्द्रगुप्तं पराजितवती। तथापि चन्द्रगुप्तः तां परिणेतुं सिद्धः न जातः। एतादृशे सन्दर्भे कीर्तिचन्द्रिकायाः कोपः सहजः। किन्तु कीर्तिचन्द्रिकया किं कृतम्? मनोज्ञमाला-चन्द्रगुप्तयोः विवाहं स्वयं निर्वर्तितवती सा। किमर्थं तया तथा कृतम्? किं तस्याः विवेकः नष्टः अभवत्? एषः विचित्रः व्यवहारः किं योग्यः? एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "कीर्तिचन्द्रिकायाः सात्त्विकः स्वभावः। युद्धकारणतः सहस्रशः सैनिकानां मरणं सा न इच्छति स्म। तथापि चन्द्रगुप्ते तस्याः विशेषानुरागः आसीत्। चन्द्रगुप्तस्य परिणयार्थं तया महान् प्रयत्नः कृतः। मुनेः अनुग्रहः सम्पादितः। तस्य साहाय्येन युद्धे जयः अपि प्राप्तः। 'मनोज्ञमालां परिणेतुम् इच्छन् चन्द्रगुप्तः राज्यच्युतिम् अपि न गणितवान्' इति अंशः तया ज्ञातः। मनोज्ञमालाविषयकः अनुरागः चन्द्रगुप्ते तीव्रः अस्ति इति सा अवगतवती। अतः सा त्यागार्थं सिद्धा जाता। स्वस्य अभिलाषं निगृह्य मनोज्ञमाला-चन्द्रगुप्तयोः विवाहं स्वयं निर्वर्तितवती। एवं कीर्तिचन्द्रिकया उदात्तता प्रदर्शिता। सा न अविवेकिनी" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# विपरीतबुद्धिः

कामराजस्य पुत्रः देवराजः। कामराजः चिन्तयति स्म यत् मम पुत्रः महाबुद्धिमान् इति। अतः सः स्वपुत्रं शिवाचार्यस्य गुरुकुले प्रवेश्य ग्रामं प्रत्यागतवान्।

द्वित्राणां मासानाम् अनन्तरं कदाचित् कामराजः कार्यनिमित्तं नगरं गतवान्। पुत्रस्य विद्याभ्यासः कथं प्रचलति इति द्रष्टुम् इच्छन् शिवाचार्यस्य गुरुकुलम् अपि गतवान् सः।

"भवतः पुत्रस्य विलक्षणा बुद्धिः। तस्य पाठनं महते क्लेशाय" इति खेदेन उक्तवान् शिवाचार्यः।

शिवाचार्यस्य आशयं निराकुर्वन् उक्तवान् कामराजः– "मम पुत्रः तीक्ष्णमतिः इत्यत्र नास्ति सन्देहः। प्रायः तस्य पाठने भवता एव विशेषश्रद्धा न प्रदर्शिता" इति।

कामराजस्य वचनैः शिवाचार्यः खिन्नः। 'एतस्य पुरतः एव एतदीयपुत्रस्य बुद्धिमत्ता कीदृशी इति प्रदर्शयामि' इति आलोच्य सः देवराजं स्वसमीपम् आहूतवान्। पृष्टवान् च– "वत्स! पूर्वं निपुणाः तन्तुवायाः आसन् इति श्रूयते। ते तादृशीं शाटिकाम् अपि वयन्ति स्म, या च अग्निपेटिकायां स्थापयितुं शक्यन्ते स्म। एषः अंशः अवगतः वा?" इति।

"आं श्रीमन्" इति वदन् अङ्गीकारपूर्वकं शिरः चालितवान् देवराजः।

"यत् अवगतं तत् स्वशब्दैः विवृणोतु तावत्" इति उक्तवान् शिवाचार्यः।

"तस्मिन् काले तादृश्यः महत्यः अग्निपेटिकाः निर्मीयन्ते स्म, यासु च शाटिकाः स्थापयितुं शक्यते स्म" इति उक्तवान् देवराजः।

पुत्रस्य उत्तरं श्रुत्वा कामराजः लज्जितः अभवत्। शिवाचार्यं क्षमां प्रार्थयन्– "एतस्य विपरीतबुद्धिः कथं समीकरणीया इति आलोच्य यं क्रमं भवान् उचितं मन्यते, तेन एतं पाठयतु कृपया" इति उक्त्वा ततः निर्गतवान्।



# चन्दमामानुबन्धः—२६

# भारतविषये महात्मनां चिन्तनम्



## त्यागभावना

बिपिनचन्द्रपाल् (१८५८-१९३२) कश्चन श्रेष्ठः स्वातन्त्र्ययोद्धा। तस्य जन्म बंगलादेश इति इदानीं कथ्यमाने प्रदेशे सायिचेल् इत्यत्र अभवत्। तस्य वक्तृत्वं सङ्घटनासामर्थ्यं च अपूर्वम् आसीत्। असहकारान्दोलने सः सक्रियः कार्यकर्ता आसीत्। सङ्घर्षरतः सः बहुवारम् आंग्लेयान् पीडितान् सङ्कटग्रस्तान् च कृतवान् आसीत्। भारते उद्गच्छतः नवोत्साहस्य स्पर्शः तेन अनुभूतः आसीत्। तस्य चिन्तनं कीदृशम् आसीत् इति वयं तदीयैः शब्दैः एव जानीयाम तावत्— "एतस्मिन् पवित्रे राष्ट्रकार्ये साहाय्यहस्तं प्रसारयन्तु इति देशः उच्चस्वरेण नेतॄन्, कर्मकरान्, पण्डितान्, दार्शनिकान्, सङ्घटकान्, कार्यनिर्वाहकान्, सर्वान् च आह्वयति। सर्वान् निमन्त्रयन् एषः देशः, निमन्त्रणम् अङ्गीकृतवतां भुजयोः उपरि आत्मत्यागरूपं महान्तं भारं निक्षिपन् अस्ति। ये विरामसमयं, सञ्चितं धनं च केवलं देशसेवार्थं समर्पयन्तः आसन् तान् देशः प्रार्थयते यत् भवतां समग्रं सम्पादनं समग्रं समयं च मातृभूमेः पदतले समर्पयन्तु"। इति।

इदानीम् अस्माभिः आत्मा प्रष्टव्यः यत् महतो महीयसः एतस्य देशस्य विषये भक्तिः त्यागभावना च अस्मासु कियता प्रमाणेन अस्ति इति, वयं कियता प्रमाणेन एतेषां देशभक्तानाम् आशां पूरयितुं शक्नुयाम इति च।

## भवन्तः जानन्ति वा?

१. सर्वप्रथमं कः हृदयस्थानान्तरारोपणचिकित्सां कृतवान्?
२. येन हृदयस्थानान्तरारोपणचिकित्सा प्राप्ता, सः कः?
३. यदा येसुक्रिस्तः शूलम् आरोपितः तदा कः रोमन्चक्रवर्ती आसीत्?
४. अतिदीर्घकर्णवत्याः कपिजातेः नाम किम्?
५. विंशतिशतकीयः कः चक्रवर्ती उद्घोषितवान् यत् मयि काऽपि दैवीशक्तिः नास्ति इति?
६. कस्मिन् सन्दर्भे तेन एवम् उद्घोषणं कृतम्?

(उत्तराणि ३६तमे पृष्ठे)

# ब्रह्मा

चतुर्मुखब्रह्मणः जन्म सृष्टेः पूर्वं विष्णोः नाभिकमलात् जातम्। एवं हि श्रूयते यत् सृष्ट्यर्थम् अपेक्षितया दिव्यशक्त्या सह जन्म प्राप्तवता ब्रह्मणा सह प्रकाशः प्रणवनादः (ॐकारः) चापि उत्पन्नौ इति।

ब्रह्मा चराचरात्मकम् एतत् जगत् सृजन् शक्तिसम्पन्नान् मुनीन् प्रजापतींश्चापि सृष्टवान्। तेषु मरीचिः, अत्रिः, आङ्गिरसः, पुलस्त्यः, पुलहः, क्रतुः, वसिष्ठः, भृगुः, दक्षः, नारदश्चेति दश जनाः प्रसिद्धाः।

समग्रायाः सृष्टेः पितामहः अस्ति ब्रह्मा। अतः सर्वेषु चराचरेषु समाना प्रीतिः वात्सल्यं च तस्य। अतः एव बहवः दुष्टराक्षसाः अपि ब्रह्मणः वरं प्राप्तुं शक्तवन्तः। एतादृश्यः घटनाः पुराणेषु बहुधा उपलभ्यन्ते।

आदिकवेः वाल्मीकेः मुखात् सर्वप्रथमं श्लोकः निर्गतः यत्, लोककल्याणार्थं वेदव्यासः वेदानां विभागं कृतवान् यत् तदुभयत्रापि ब्रह्मणः प्रेरणा एव कारणम् आसीत्। विद्यायाः अधिष्ठात्री देवी भगवती वाग्देवी ब्रह्मणः पत्नी।



# र स वा र्ता:

## अल्पवयस्कः गौरीशङ्करशिखरारोही

फ्रन्स्देशीयः बेट्राण्ड् रोच्ज्नामकः तरुणः स्वस्य सप्तदशे एव वयसि सद्यः गौरीशङ्कर(एवरेस्ट्) शिखरम् आरूढवान्। विश्वे एव अत्युन्नतम् एतत् शिखरम् आरूढवत्सु एषः एव अल्पवयस्कः। एतेन सह पर्वतारोहणार्थम् उद्युक्तः पङ्गुः (एकेन पादेन हीनः) वेज्लेज् बिशनायज्वर्यः शिखरस्य समीपं गतः अपि शिखरचूडं प्राप्तुम् अशक्तः अभवत्।




## अन्तरिक्षे अपि कालुष्यम्

भूमौ मानवेन नद्यः समुद्रश्चापि कलुषीकृताः, स्वेच्छया नौकास्थानानि अपि निर्मितानि। इदानीं तु तेन व्योमगर्भे अपि अपायाः उत्पादिताः श्रूयन्ते। लक्षशः अन्तरिक्षयानानां खण्डाः, ये च पूर्वं प्रेषितानां क्षेपणीनाम् अवशेषाः, ते इदानीं भूमिमार्गे भ्रमन्ति। एते भागाः नूतनैः अन्तरिक्षयानैः घट्टिताः भवितुम् अर्हन्ति। एतस्य परिणामः तु नितरां शोचनीयः भवेत्।



# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. सः आंग्लेयः वार्ताहरः कः, यश्च सैनिकविद्रोहघटनां नेत्राभ्यां दृष्टवान् अनन्तरकाले प्रकटितवान् चापि?

२. सः कस्याः पत्रिकायाः प्रतिनिधिः आसीत्?

३. वाल्टेर्वर्येण लिखितः प्रसिद्धः काकुप्रधानः कथाग्रन्थः कः?

४. केन कविना १,२०० रूपकाणि लिखितानि?

५. बौद्धमतग्रन्थाः कया भाषया लिखिताः सन्ति?

# उत्तराणि

## सामान्यज्ञानम्

१. डा. क्रिश्चियन् बर्नार्ड्।

२. लुयी वाश्कनकी।

३. टैबीरियस्।

४. मार्नाडिल ईांन।

५. जपानदेशीयः चक्रवर्ती हिरोहिटो।

६. द्वितीये जागतिकयुद्धे जपानदेशेन पराजयः यदा प्राप्तः तदा।

## साहित्यज्ञानम्

१. विलियम् होवर्ड् रस्सेल्।

२. लण्डन्प्रदेशीयायाः 'दि टैम्स्'नामिकायाः पत्रिकायाः।

३. 'कैनडायिड्'नामकः ग्रन्थः।

४. लोप् डी वेगा आफ् स्पेन् (१५६२-१६३५)।

५. पालीभाषया।



प्रपञ्चपुराणगाथावली–१

# थीब्स्नगरनिर्माणम्

केड्मनः टैर्देशस्य युवराजः। कदाचित् ज्योतिषिकाः तम् उक्तवन्तः– "विशिष्टैः लक्षणैः युक्ता काचित् धेनुः दृश्यते भवता। सा अनुसरणीया। यत्र सा शयनं करोति तत्र नूतनं नगरं निर्मातव्यम्। एतेन मङ्गलं भविष्यति" इति। अल्पेषु एव दिनेषु केड्मनेन तादृशी धेनुः दृष्टा। सः ताम् अनुसृतवान्।

अग्रे गच्छन्ती धेनुः अरण्यं प्रविष्टवती। सुदूरं गत्वा सा अरण्ये कुत्रचित् शयनम् अकरोत्। एतत् स्थलं केन्द्रीकृत्य नगरं निर्मातव्यम् इति सङ्कल्प्य, अभिज्ञानार्थं तत्र अङ्कनं कृत्वा राजधानीं प्रत्यागतवान् केड्मनः।





कैश्चित् अनुचरैः सह सः तं प्रदेशं गतवान्। कार्यसमये पानादीनां निमित्तं जलम् आवश्यकं खलु? अतः सः अनुचरान् सूचितवान् यत् समीपे कुत्रापि जलं लभ्यते वा इति दृष्ट्वा आगच्छन्तु इति।



ते अनुचराः तं प्रदेशं परितः अटितवन्तः। अनतिदूरे एव सशब्दं प्रवहन् जलपातः दृष्टः तैः। महता उत्साहेन ते जलपातस्य जलं पातुम् उद्युक्ताः। तावता जलपातस्य पृष्ठतः स्थितः कश्चन भीकरः मृगः गर्जन् अग्रे आगतः।

मृगात् आत्मनः रक्षणार्थं ते बहुधा प्रयत्नं कृतवन्तः। किन्तु तेषां प्रयत्नः विफलः। सः घोरः मृगः तान् सर्वान् अमारयत्। तेषाम् आक्रन्दनं श्रुतम् आसीत् केड्मनेन। सः धावन् तत्र आगतवान्।





दूरात् एव मृगं दृष्ट्वा अग्रे गमनेन अपायः इति ज्ञात्वा केड्मनः एथिनादेवतां मनसा प्रार्थितवान्। तस्याः अनुग्रहतः खड्गं प्राप्य धैर्येण अग्रे गत्वा तं घोरं मृगम् अमारयत्।

अनन्तरं देवतायाः सूचनायाः अनुगुणं केड्मनः मृगस्य मुखात् इतस्ततः पतिताः दंष्ट्राः सङ्गृह्य कुत्रचित् गर्ते निखातवान्।





गर्तस्थाभ्यः दंष्ट्राभ्यः अवितर्किततया घोराः सैनिकाः उद्भूताः। एतत् दृष्ट्वा ततः पलाय्य केड्मनः शिलानां मध्ये निलीय स्थितवान्।

किञ्चित्कालानन्तरं केड्मनः शिलानां पृष्ठतः तिष्ठन् सैनिकान् उद्दिश्य एकं पाषाणं क्षिप्तवान्। स च पाषाणः कुतः आगतः इति अजानन् एकः अपरम् उक्तवान्– 'भवान् माम् उद्दिश्य पाषाणं क्षिप्तवान्' इति। 'नैव अन्येन कृतं तत्' इति उक्तवान् अपरः। 'भवता एव क्षिप्तम्' इति पुनः उक्तवान् प्रथमः। एवं कलहः आरब्धः। सैनिकाः द्विधा विभक्ताः।





किञ्चित्कालं यावत् परस्परनिन्दनं प्रवृत्तम्। अन्ते तेषां मध्ये युद्धम् एव आरब्धम्। परस्परं निर्दयं मारितवन्तः ते।

एतस्मिन् युद्धे बहवः मृताः। पञ्च जनाः केवलम् अवशिष्टाः। तदा शिलानां मध्यतः केड्मनः अग्रे आगतवान्। एते पञ्च दन्तजाः (दन्तेभ्यः जाताः) अपि केड्मनस्य नायकत्वम् अङ्गीकृतवन्तः। 'नगरनिर्माणार्थं साहाय्यं करिष्यामः' इति उक्तवन्तः च। एतया घटनया केड्मनः नितरां सन्तुष्टः।





एवं ग्रीस्‌देशीयस्य थीब्स्‌नगरस्य निर्माणम् आरब्धम्। नगरनिर्माणार्थं ये साहाय्यं कृतवन्तः ते पञ्च दन्तजाः एव थीब्स्‌नगरीयाणां पञ्चानां कुटुम्बानाम् आदिपुरुषाः। केषाञ्चित् शतकानाम् अनन्तरम् अलेक्साण्डर्‌चक्रवर्तिना एतत् नगरं नाशितम्। पूर्वं यत्र एतत् नगरम् आसीत् स च प्रदेशः इदानीं थिवास्‌नाम्ना उच्यते।



# गतानुगतिकता

कस्मिंश्चित् ग्रामे पूर्वं सीतापतिः नाम कश्चन कृपणः निवसति स्म। कदाचित् सः पार्श्वग्रामं गत्वा कार्यं समाप्य स्वग्रामं प्रत्यागच्छन् आसीत्। मार्गे कश्चन वृद्धः वृक्षस्य अधः शयनं कृत्वा वेदनया क्रन्दनं कुर्वन् आसीत्। सः समीपम् आगच्छन्तं सीतापतिं दृष्ट्वा– "भोः, अहं वृद्धः अस्मि। पिपासया म्रियमाणः अस्मि। अतः कृपया किञ्चित् जलम् आनीय मम मुखे पातयतु। तेन भवता पुण्यं सम्पादितं भवेत्" इति कष्टेन उक्तवान्।

तदा सीतापतिः उक्तवान्– "प्रतिफल-प्राप्तिं विना अहं किमपि कार्यं न करोमि। एषः मम स्वभावः। भवते जलं दत्तं चेत् मया किं प्राप्येत? भवतः कोषे धनं किमपि अस्ति वा?" इति।

वृद्धः किमपि अवदन् कोषात् एकं रजतनाणकं निष्कास्य सीतापतये दत्त्वा, तेन दत्तं जलं पीतवान्। अनन्तरं पुनः उक्तवान्– "भोः, भवता मम प्राणाः रक्षिताः। भवतः उपकारम् आजीवनं स्मरामि। भवता यत् साहाय्यं कृतं तस्य निमित्तं प्रत्युपकारं कर्तुम् इच्छामि। अतः अहं भवता सह भवदीयं ग्रामम् आगमिष्यामि" इति।

"दर्शनेन तु ज्ञायते यत् भवान् कश्चन दरिद्रः इति। भवतः बुद्धिः अपि भ्रष्टा इति भाति। जलदानस्य निमित्तं विवेकी कोऽपि रजतनाणकं न दद्यात्। एतादृशात् बुद्धिहीनात् भवत्तः मम न किमपि प्रयोजनम्। अतः मया सह आगमनं मास्तु भवतः" इति उक्तवान् सीतापतिः।

"माम् एवम् उपेक्षया मा पश्यतु। मत्तः भवतः लाभः भविष्यति एव। अहं भवतः ग्रामम् आगत्य भवतः गृहस्य पुरतः स्थित्वा



भिक्षां याचामि। तदा भवान् एकं ताम्रनाणकं मह्यं ददातु। एतस्य परिणामतः भवान् अनूह्यं लाभं प्राप्स्यति" इति उक्तवान् वृद्धः।

"ताम्रनाणकं किं, वराटिकाम् अपि न दास्यामि भवते। पापपुण्यादिषु विश्वासः सर्वथा नास्ति मम। दानादयः व्ययकारकाः अन्धविश्वासाः" इति उक्तवान् सीतापतिः।

"मम कथनं पूर्णं शृणोतु प्रथमम्। मह्यं यावत् ददाति तस्य शतगुणितं लाभं प्राप्नोति भवान्। भवता मह्यं दानरूपेण धनं दत्तं चेत् 'मयि विशिष्टा शक्तिः काऽपि स्यात्' इति भावयन्तः अन्ये ग्रामीणाः अपि दानं कुर्वन्ति। मासं यावत् भवान् दानं करोतु। अहं भवते प्रतिदिनं शतं ताम्रनाणकानि दास्यामि" इति उक्तवान् वृद्धः।

"शतं ताम्रनाणकानि दास्यामि इति भवता यत् उक्तं तत् मम सन्तोषाय अभवत्। किन्तु भवान् यदि वञ्चयेत् तर्हि मया दत्तं ताम्रनाणकं नष्टं भवेत् खलु" इति उक्तवान् सीतापतिः।

"एवं तर्हि अद्य अहं भवते एकं ताम्रनाणकं ददामि। श्वः भवान् तदेव नाणकं मह्यं ददातु। एवं करणे भवतः न काऽपि हानिः" इति उक्त्वा एकं ताम्रनाणकं सीतापतये दत्तवान् वृद्धः।

वृद्धेन दत्तं नाणकं स्वीकृत्य गृहं गतवान् सीतापतिः। अनन्तरदिने वृद्धः भिक्षुकवेषेण आगत्य याचनां कृतवान्। सीतापतिः तस्मै ताम्रनाणकं दत्तवान्। एषा वार्ता क्षणाभ्यन्तरे ग्रामे प्रसृता। 'महाकृपणः विशेषलाभं विना दानं न कुर्यात् एव। अतः एतस्मिन् वृद्धे विशिष्टा शक्तिः काऽपि स्यात्' इति भावयन्तः अन्ये अपि वृद्धाय एकैकं ताम्रनाणकं दत्तवन्तः। वणिजः धनिकाश्च केचन अधिकम् अपि दत्तवन्तः।

एवं प्रथमदिने एव वृद्धेन सहस्राधिकानि रूप्यकाणि प्राप्तानि। सायं सः सीतापतये शतं ताम्रनाणकानि समर्प्य– "श्वः अपि भवान् मह्यं धनं ददातु। मा विस्मरतु" इति उक्तवान्।

तदा सीतापतिः उक्तवान्– "ह्यः यत् वचनं दत्तं तदनुगुणं शतं ताम्रनाणकानि

अर्पितानि भवता। अतः एतत् धनं मदीयम् एव। श्वः अहं यदि भवते एकं नाणकं दद्यां, तदा भवान् यदि मां वञ्चयेत् तर्हि मम तावती हानिः भवेत् खलु?'' इति।

अतः वृद्धः एकं ताम्रनाणकं सीतापतये दत्त्वा प्रतिगतवान्। प्रथमदिने यथा प्रवृत्तं तथैव प्रवृत्तं द्वितीयदिने अपि।

दशाधिकदिनानि यावत् एवम् एव प्रवृत्तम्। प्रतिदिनं सीतापतये शतं ताम्रनाणकानि अर्पयति वृद्धः। तथापि तस्य वशे प्रभूतं धनम् अवशिष्टम्। तेन धनेन सः दूरे कुत्रचित् एकं गृहं क्रीतवान्। गृहे द्वित्रान् सेवकान् नियोजितवान्। कुसीदवाणिज्यम् अपि आरब्धं तेन। तथापि सः प्रतिदिनं भिक्षुकवेषेण सीतापतेः ग्रामम् आगत्य भिक्षायाचनं तु करोति एव।

'वृद्धः प्रतिदिनं प्रतिगृहं धनं प्राप्नोति' इति विषयः ग्रामीणैः ज्ञातः। 'एतस्य पृष्ठभूमिका अन्या एव स्यात्' इति भावयन्तः ते– 'रहस्यरूपेण अनुसरणं कृत्वा वृद्धस्य सर्वे व्यवहाराः परिशीलनीयाः' इति आदिश्य एकं जनं नियोजितवन्तः।

दिनद्वयाभ्यन्तरे वृद्धस्य चरित्रं ज्ञातं तैः। ते न्यायाधिकारिणं समग्रं निवेदितवन्तः। न्यायाधिकारी वृद्धं, सीतापतिं च आनायितवान्। सर्वेषां सम्मुखे वृद्धं पृष्टवान् च– ''भवान् वञ्चकः इति एते वदन्ति। एतद्विषये भवान् किं कथयति?'' इति।



तदा वृद्धः सधैर्यम् उक्तवान्– ''एतस्मिन् व्यवहारे मया सीतापतिना वा काऽपि वञ्चना न कृता। 'शतं ताम्रनाणकानि प्रतिदिनं दीयन्ते' इत्येतस्मिन् मम वचने विश्वस्य सीतापतिना दानं कृतम्। तम् अनुसरन्तः अन्ये अपि दानं कृतवन्तः। सीतापतिना दानं कृतम्। मया दानं प्राप्तम्। एतदुभयम् अपि न न्यायविरुद्धम्। अतः आवयोः व्यवहारे काऽपि वञ्चना नास्ति'' इति।

''एषः वृद्धः सीतापतिः च सम्भूय योजनां कृत्वा अस्मान् वञ्चितवन्तौ। वृद्धः एषः सद्यः एव विशालं गृहं क्रीतवान् इति श्रूयते। कुसीदवाणिज्यम् अपि क्रियमाणम् अस्ति इति ज्ञायते। एवम् आनुकूल्ये सति अपि वृद्धः भिक्षायाचनां करोति स्म। अस्माकं ग्रामे यथा

वञ्चना कृता तथा अन्येषु ग्रामेषु अपि एषः वञ्चनां कर्तुम् अर्हति। अतः एषः वृद्धः सीतापतिः च दण्डनीयौ" इति उक्तवन्तः ग्रामीणाः।

तदा वृद्धः विनयेन न्यायाधिकारिणम् उक्तवान्– "श्रीमन्! एतस्मिन् ग्रामे मया यथा लाभः सम्पादितः तथा अन्यस्मिन् अपि ग्रामे लाभः सम्पाद्यते इति नास्ति। वस्तुतः तु तारुण्ये एव मम मनसि एतादृशः विचारः आगतः आसीत्। तदनुगुणं मया बहुत्र प्रयत्नः कृतः। किन्तु कुत्रापि साफल्यं न अनुभूतम्" इति।

"एतस्मिन् ग्रामे यत् साफल्यम् अनुभूतं तत्र किं कारणम्?" इति कुतूहलेन पृष्टवान् न्यायाधिकारी।

"किम् अन्यत्? एतेषां मूढत्वम् एव। लाभः प्राप्येत इति आशया सीतापतेः अनुसरणं कृतवन्तः एते। केनापि विशेषचिन्तनं न कृतम्। गतानुगतिकता आश्रिता। मया भिक्षायाचनं कृतं, न तु वञ्चनम्। सीतापतिना स्वयं दानं कृतम्। 'भवन्तः सर्वे अपि माम् अनुकुर्वन्तः दानं कुर्वन्तु' इति उपदेशः तेन न कृतः। मया कस्यापि सकाशात् बलात् धनं न स्वीकृतम्। सर्वे स्वबुद्ध्या एव धनं दत्तवन्तः। एवम् एते स्वस्य मौढ्येन स्वयं वञ्चिताः सन्ति। अतः अहम् अन्यः वा अत्र वञ्चकः न" इति उक्तवान् वृद्धः।

वृद्धस्य वचनं श्रुत्वा स्वस्य मूढतां स्वयं जानन्तः ग्रामीणाः मौनं ततः निर्गतवन्तः।

"एतस्मिन् सन्दर्भे जनानां मूढतायाः कारणतः भवता धनं सम्पादितम्। इतःपरं यदि भवान् एवं कुर्यात् तर्हि कठोरं दण्डितः भवेत्। कुटिलोपायाश्रयणं परित्यज्य सन्मार्गेण जीवतु" इति हितम् उपदिश्य वृद्धं प्रेषितवान् न्यायाधीशः।

यद्यपि वृद्धः धनाशां प्रदर्श्य सीतापतिं दानार्थं प्रेरयित्वा तद्द्वारा धनं सम्पादितवान्, तथापि तस्मिन् ग्रामे विवेकस्य जागरणे हेतुः अपि आसीत् सः।






रामस्य आदेशस्य अनुगुणं लक्ष्मणः किष्किन्धां प्रति प्रस्थितवान्। तस्य स्कन्धे धनुः विलसति स्म। 'मां दृष्ट्वा सुग्रीवः कथं व्यवहरेत्, मया कीदृशैः वचनैः भावः प्रकाशनीयः, मया उच्यमानं श्रुत्वा सुग्रीवः किं वदेत्, तस्य प्रत्युत्तरं किं दातव्यम्, अनौचित्यं यथा न स्यात् तथा व्यवहारः कथं स्यात्' इत्यादिकं चिन्तयन् गच्छन् अस्ति लक्ष्मणः।

धनुः धृत्वा गाम्भीर्येण आगच्छन्तं लक्ष्मणं दृष्ट्वा कपयः चिन्तितवन्तः यत् कोऽपि शत्रुः आगच्छन् अस्ति इति। ते पाषाणवृक्षादीन् स्वीकृत्य युद्धार्थं सिद्धाः जाताः। कपीनाम् एतादृशव्यवहारेण लक्ष्मणस्य कोपः प्रवृद्धः। लक्ष्मणस्य मुखे दृश्यमानं कोपं दृष्ट्वा भीताः वानराः ततः पलायितवन्तः। लक्ष्मणम् अभिजानन्तः केचन वानराः धावन्तः गत्वा सुग्रीवं निवेदितवन्तः यत् क्रुद्धः लक्ष्मणः आगच्छन् अस्ति इति। यद्यपि सुग्रीवेण एतत् श्रुतं, तथापि पत्नीभिः सह विनोद-सरसोक्तिषु मग्नः सः कपीनां वचनेषु उपेक्षां प्रदर्शितवान्।

गाम्भीर्येण पदं स्थापयतः लक्ष्मणस्य अभिमुखम् आगतवान् अङ्गदः। तम् उक्तवान् लक्ष्मणः– "अये बालक! गत्वा सुग्रीवं वदतु यत् लक्ष्मणः अहम् आगतः अस्मि इति। मम अग्रजः नितरां खिन्नः अस्ति। अतः अहम् अत्र आगतः। एतम् अंशम् अपि तं निवेदयतु भवान्। अविलम्बेन मम सम्मुखम् आगत्य मम वचनं शृणोतु सः।



त्वरया एतां वार्तां प्रापयतु भवान्" इति।

अङ्गदः त्वरया सुग्रीवसमीपं गत्वा निवेदितवान्– "लक्ष्मणः भवतः मेलनार्थम् आगतः अस्ति। तस्य मुखे क्रोधः स्फुटं दृश्यते" इति।

एतत् श्रुत्वा सुग्रीवः मन्त्रिणः स्वसमीपम् आहूय उक्तवान्– "मित्राणि! क्रुद्धः लक्ष्मणः इतः एव आगच्छन् अस्ति इति श्रूयते। मया तादृशः अपराधः कः कृतः, येन लक्ष्मणः क्रुद्धः भवेत्? शत्रवः मद्विषये लक्ष्मणं मिथ्यावचनानि उक्तवन्तः स्युः। तस्य परिणामतः लक्ष्मणः क्रुद्धः स्यात्। लक्ष्मणः क्रुद्धः भवतु रामः वा, मम तस्मात् न काऽपि भीतिः। मम भीतिः तु सा– उपकृतवतः रामस्य प्रत्युपकारः मया कर्तुं शक्येत वा न वा इति। रामलक्ष्मणौ मम सुहृदौ। तौ विना कारणं कुपितौ इत्यतः अहं नितरां खिन्नः अस्मि" इति।

तदा मन्त्रिषु अन्यतमः हनूमान् उत्थाय सुग्रीवम् उक्तवान्– "राजन्! स्पष्टोक्त्यै क्षन्तव्यः अहम्। यः मन्त्री सन् राजानं हितमार्गे प्रेरयितुं न शक्नोति सः देशद्रोही स्यात्। मन्त्री दोषं प्रवर्तमानं जानन् अपि सङ्कोचवशात् यदि मौनं तिष्ठेत् तर्हि देशस्य महती हानिः स्यात्। अतः मन्त्री आत्मीयः च सन् अहं किञ्चित् वक्तुम् इच्छामि। भवता सावधानं तत् श्रोतव्यम्। उचितानुचिततां निर्णीय अग्रे पदं स्थापनीयम्। लक्ष्मणः विना कारणं क्रुद्धः स्यात् इति न भाति मम। रामस्य साहाय्यं करणीयम् इति भवान् स्मरति इत्येतत् युक्तम् एव। किन्तु भवता अजागरूकतावशात् कालः न लक्षितः। इदानीं शरदृतुः उपस्थितः अस्ति। युद्धप्रयत्नार्थम् एषः योग्यः कालः। अतः रामः लक्ष्मणं प्रेषितवान् स्यात्। कालोपस्थितिं विस्मरद्भिः अस्माभिः दोषः कृतः। अतः लक्ष्मणः क्रोधवशात् कटुवचनानि वदेत् चेदपि अस्माभिः मौनं सोढव्यम्। सर्वप्रथमम् अस्माभिः लक्ष्मणस्य क्रोधः अपनेतव्यः। अतः पत्नीपुत्रादिभिः परिवारेण च सह भवता गत्वा लक्ष्मणः स्वागतीकरणीयः। नमस्कार-सत्कारादिभिः मृदुवचनैः च तस्य कोपस्य उपशमनं



करणीयम्'' इति।

अनन्तरम् अङ्गदः वेगेन प्रतिनिवृत्य लक्ष्मणं सादरम् अग्रे आनीतवान्। वानरप्रमुखाणां गृहाणि पश्यन् लक्ष्मणः सुग्रीवस्य भवनस्य समीपम् आगतवान्। तत्र अन्तःपुरात् मधुरः वीणानादः श्रूयते स्म। अन्तःपुरम् अमरावती इव अलङ्कृतम् आसीत्। अनेकाः सुन्दर्यः परिचर्यायां निरताः दृश्यन्ते स्म। एतत् सर्वं दृष्ट्वा लक्ष्मणः निश्चितवान् यत् सुग्रीवः भोगजीवने निमग्नः इति। तस्य कोपः चतुर्गुणितं प्रवृद्धः। सः धनुः उन्नीय ज्याम् आकृष्य टङ्कारध्वनिम् उत्पादितवान्।

धनुष्टङ्कारः सुग्रीवेण अपि श्रुतः। लक्ष्मणस्य क्रोधस्य स्वरूपं ज्ञातं तेन। सः इदानीं भयेन कम्पते। तदीयं मुखं कान्तिहीनं जातम्। सः ताराम् उक्तवान्– ''मया श्रुतम् आसीत् यत् लक्ष्मणः शान्तः मृदुः च इति। न जाने, केन कारणेन सः एवं क्रुद्धः इति। मया घोरः अपराधः तु कोऽपि न कृतः। तदस्तु, भवती अग्रे गत्वा तं स्वागतीकृत्य तस्य कोपोपशमनार्थं प्रयत्नं करोतु। तावता अहम् आगच्छामि'' इति।

तारा लक्ष्मणस्य अभिमुखम् आगत्य उक्तवती– ''वत्स, लक्ष्मण! मित्रे सुग्रीवे भवता कोपः किं शोभते? सः भवतोः कार्यं न विस्मृतवान्। अजागरूकताकारणतः अल्पः विलम्बः तु अनुष्ठितः, सत्यम्। किन्तु तावता एतावान् कोपः किमर्थम्? महात्मनां क्षमा एव शोभावहा, न तु क्रोधः। अतः क्रोधम् उपसंहरतु। सुग्रीवं क्षाम्यतु च'' इति।

लक्ष्मणः कामपि प्रतिक्रियां न प्रदर्शितवान्। तारा लक्ष्मणेन सह अन्तः गतवती। तत्र स्वर्णाभरणैः, पट्टवस्त्रैः पुष्पमालाभिश्च आत्मानम् अलङ्कृत्य स्वर्णसिंहासने उपविष्टः सुग्रीवः दृष्टः लक्ष्मणेन। सुग्रीवं परितः सेवारताः नृत्यन्त्यः च बह्व्यः महिलाः दृश्यन्ते स्म। भोगं स्मारयत् एतत् दृश्यं दृष्ट्वा लक्ष्मणः कालरुद्रः इव नितरां क्रुद्धः।

लक्ष्मणं दृष्ट्वा भयचकितः सुग्रीवः झटिति सिंहासनात् उत्थितवान्। सर्वाः स्त्रियः स्वकार्यं परित्यज्य मौनं स्थितवत्यः।



विनयेन नमस्कुर्वन्तं सुग्रीवं उक्तवान् लक्ष्मणः– "रामः भवतः साहाय्यं कृतवान्। प्रतिक्रियारूपेण भवता रामस्य कार्यस्य विषये अवधानं दातव्यं खलु? भवान् कृतघ्नः असत्यवादी च। सीतायाः अन्वेषणार्थं भवता कोऽपि प्रयत्नः न कृतः। भवान् एवं कृतघ्नताम् आचरेत् इति रामः यदि जानीयात् तर्हि सः भवतः साहाय्यं न अकरिष्यत्। भवान् च राजा न अभविष्यत्। इदानीम् अहं भवन्तं वालिसमीपं प्रेषयितुम् आगतवान् अस्मि" इति।

तदा सुग्रीवस्य व्यवहारं समर्थयन्ती तारा उक्तवती– "आर्य, लक्ष्मण! अलं मारणादिवचनेन। सुग्रीवः न दुष्टः, न वा कृतघ्नः। सुग्रीवः कीदृश्यां दशायाम् अस्ति इति भवान् प्रत्यक्षं पश्यन् अस्ति खलु? सः कृत्रिमेण व्यवहारेण, मिथ्यावचनैः वा भवन्तं न वञ्चितवान्। एतदेव तस्य सत्यप्रियतां निष्कपटतां च प्रदर्शयति। चिरकालिकस्य कष्टस्य अनन्तरं सुखं प्राप्तं तेन। अतः भोगे किञ्चित् अधिका प्रवृत्तिः दृष्टा। एषः दोषः अक्षम्यः तु न। इतः परं सः रामकार्यार्थं सर्वाणि सुखानि परित्यज्य व्यवहरिष्यति। सीतादेवीं रामस्य पुरतः आनीय स्थापयिष्यति। दुष्टं रावणं यमसदनं प्रेषयिष्यति च। सीतान्वेषणविषये एतेन किमपि न कृतम् इति न। सर्वाभ्यः दिग्भः वानराः आगच्छेयुः इति सूचना एतावता सर्वत्र प्रेषिता। अद्य ते अत्र सम्मेलिष्यन्ति। एवम् आगतेषु एव केचन भवन्तं शत्रुं भावयन्तः युद्धार्थम् उद्युक्ताः आसन्। सुग्रीवेण रामः न प्रत्यक्षं दृष्टः इति तु दोषाय एव। एषः अल्पः दोषः औदार्येण क्षन्तव्यः। दयानिधिः रामः अपि क्षमां प्रदर्शयेत् एव" इति।

तारायाः वचनैः लक्ष्मणस्य कोपस्य उग्रता अपगता। तावता सुग्रीवः उक्तवान्– "आर्य, लक्ष्मण! मत्तः यः अपराधः जातः तदर्थं क्षमां प्रार्थये। लोके तादृशः जनः न स्यात्, येन एकः अपि दोषः न कृतः स्यात्। किम् अधिककथनेन? यत् निवेदनीयं तत्सर्वं तारया निवेदितम् एव। अतः कृपया प्रसीदतु भवान्" इति।

इदानीं लक्ष्मणस्य कोपः पूर्णतः शान्तः। सः सुग्रीवम् उक्तवान्– "सीतान्वेषणे रावणसंहारे च भवान् बद्धादरः चेत् तावता अलम्। इदानीं मया सह आगत्य, अहं कर्तव्यपालनपरः अस्मि इति उक्त्वा पत्नीवियोगतप्तं रामं सान्त्वयतु" इति।

सुग्रीवः पार्श्वे स्थितं हनूमन्तम् उक्तवान्– "आञ्जनेय! अस्माकं सूचनायाः अनुगुणं के के वानराः अत्र आगताः सन्ति इति पश्यतु। सर्वे न उपस्थिताः चेत् तेषाम् आनयनार्थं अन्यान् वेगगामिनः दूतान् प्रेषयतु। वानरान् आनेतुं पूर्वं प्रेषिताः सर्वे दूताः प्रत्यागताः वा इति परिशीलयतु। यैः कार्यं सम्यक् न कृतं तान् मम सम्मुखम् आनयतु। दशदिनाभ्यन्तरे ये अत्र उपस्थिताः न भविष्यन्ति तेषां मरणदण्डनं भविष्यति इति उद्घोषयतु" इति।

सुग्रीवस्य आज्ञायाः अनुगुणं हनूमान् सर्वां व्यवस्थां परिशीलितवान्। यतः वानराः इतोऽपि न आगताः तस्यां दिशि वेगगामिनः दूतान् प्रेषितवान्।

सुग्रीवः सुवर्णमय्यां शिबिकायां लक्ष्मणम् उपवेश्य, स्वयम् अपि उपविश्य रामदर्शनार्थं प्रस्थितवान्। सर्वे मन्त्रिणः परिवारजनाः च तम् अनुसृतवन्तः।

प्रस्रवणगिरेः गुहायाः पुरतः लक्ष्मणः सुग्रीवः च शिबिकातः अवतीर्णवन्तौ। सुग्रीवः करौ योजयित्वा विनयेन अग्रे गत्वा रामं साष्टाङ्गं नमस्कृतवान्। रामः तं प्रीत्या उत्थाप्य दृढम् आलिङ्गितवान्। सर्वे तत्रैव



उपविष्टवन्तः।

कुशलवार्तालापानन्तरं सुग्रीवः रामम् उक्तवान्– "राम! वीराधिवीराः कोटिशः वानराः भवतः साहाय्यार्थं सर्वाभ्यः दिग्भ्यः उपस्थास्यन्ति। रावणं तत्कुलं च नाशयित्वा सीतां भवदधीनां करिष्यन्ति ते" इति।

सीतान्वेषणार्थं कृतं प्रयत्नं सुग्रीवमुखात् श्रुतवतः रामस्य मुखं विकसितम् अभवत्। "साधु, सुग्रीव! भवतः साहाय्येन शत्रुं नाशयितुम् अहं निश्चयेन शक्ष्यामि इति विश्वासः इदानीम् आगतः मम" इति सुग्रीवम् उक्तवान् रामः।

तावता सुदूरे भूमेः उद्गता धूलिः दृष्टा। पुनः अल्पे काले वानराकृतयः अपि दृष्टिगोचराः जाताः। सर्वाभ्यः दिग्भ्यः किष्किन्धां प्रति आगच्छन्तः सन्ति वानराः। श्वेतवर्णीयैः, धूसरवर्णीयैः च वानरैः सह शतबलिः नाम महावानरः आगतवान्। सुवर्णच्छायैः वानरैः सह सुषेणः नाम वानरः आगतवान्। एषः सुषेणः तारायाः पिता। रुमायाः पिता तारः अपि विंशतिसहस्रवानरैः सह उपस्थितः अभवत्। सिंहसदृशैः वानरवीरैः सह आञ्जनेयस्य पिता केसरी अपि उपस्थितः। महत्या भल्लूकसेनया सह गवाक्षः धूम्रः च उपस्थितौ। कृष्णवर्णीयानां वानराणां समूहेन सह नीलः उपस्थितः। गवयः, दरीमुखः, मैन्दः, द्विविदः, गजः इत्यादयः अपि असङ्ख्यैः वानरैः सह उपस्थिताः अभवन्। गन्दमादनः, अन्ये अङ्गदसुहृदश्चापि उपस्थिताः। एवं प्रपञ्चे



स्थिताः सर्वे वानरवीराः तदनुयायिनश्च किष्किन्धायाम् उपस्थिताः अभवन्।

वानरमुख्याः सर्वे अग्रे आगत्य सुग्रीवं नमस्कृतवन्तः। तान् सर्वान् प्रदर्शयन्– "एते सर्वे भवदाज्ञापरिपालकाः" इति रामम् उक्त्वा वानरप्रमुखान् उद्दिश्य उक्तवान् सुग्रीवः– "भवद्भिः स्वानुचराणां साहाय्येन, भवदधीनेषु प्रदेशेषु स्थितेषु पर्वतेषु, नदीषु, गुहासु, वनेषु, इतरत्र च सम्यक् परिशोधनीयम्। कोऽपि विशेषः दृष्टः चेत् तत्क्षणे एव अहं सूचनीयः" इति।

अनन्तरं सः रामम् उक्तवान्– "राम! भवतः आज्ञां शिरसा धरन्ति एते कोट्यधिकाः वानराः। एतेषु कामरूपिणः, कामगामिनः, भीमबलाः, महपराक्रमशालिनः इत्यादयः सर्वे सन्ति। एतेषु कैः किं करणीयम् इति भवान् आज्ञापयतु" इति।

तदा रामः मन्दहासपूर्वकम् उक्तवान्– "सुग्रीव! अत्र बहवः वानरवीराः सन्ति। एतान् व्यक्तिशः अहं न जानामि खलु? अतः भवान् एव तत्तस्य सामर्थ्यं परिशील्य कार्ये योजयतु। सीता कुत्र अस्ति, सा जीवति वा न वा इति सर्वप्रथमं ज्ञातव्यम्। सा जीवति इति निश्चयरूपेण यदा ज्ञायते तदा अग्रिमं कार्यतन्त्रं रूपणीयम्। अतः एतदनुगुणं भवान् एव वानरान् कार्ये योजयतु" इति।

तदा सुग्रीवः विनतनामकं वानरवीरम् आहूय आज्ञापितवान् यत् लक्षसङ्ख्याकैः वानरैः सह पूर्वस्यां दिशि गच्छतु इति। मासाभ्यन्तरे प्रत्यागन्तव्यम् इत्यपि सूचितवान् सः।

तारायाः पितरं सुषेणम् असङ्ख्यैः वानरैः सह पश्चिमदिशि प्रेषितवान् सुग्रीवः। शतबलिः लक्षं वानरवीराः च उत्तरदिशि गतवन्तः।

दक्षिणदिशि नीलः, हनूमान्, जाम्बवान्, संह्रोत्रः, शरारिः, शरगुल्मः, गजः, गवाक्षः, गवयः, ऋषभः, मैन्दः, द्विविदः, विजयः, गन्धमादनः, उल्कामुखः, अनङ्गः, अङ्गदः, अन्ये बहवः वानरवीराः च गतवन्तः।





# मासराजानुग्रहः

रशिया देशे पूर्वं कश्चन धनिकः आसीत्। तस्य पुत्र्याः नाम सनया। सनयायाः माता यदा दिवङ्गता तदा धनिकेन अन्या परिणीता। सा अपि पुत्रीं प्रसूतवती। तस्याः पुत्र्याः नाम नताशा इति।

यावत् नताशा बालिका आसीत् तावत् तस्मिन् गृहे सर्वं सम्यक् आसीत्। किन्तु यदा नताशा प्रौढा जाता तदा सनयायाः दिनानि कष्टमयानि जातानि।

सनया सौन्दर्यवती बुद्धिमती सहनशीला च। विमाता, विमातृपुत्री च यावत् कष्टं यच्छतः चेदपि सनया मौनं सहते। गृहकार्याणि सर्वाणि सा एव करोति। गृहे यत् प्रवर्तते तत्सर्वं जानाति धनिकः। तथापि पत्नीतः भीतः सः मौनं तिष्ठति।

कदाचित् नताशा तन्माता च निश्चितवत्यौ यत् केनापि उपायेन सनया गृहात् निष्कासनीया इति। 'सर्वथा अशक्यं कार्यम् उक्तं चेत् तत् कर्तुं गता सनया पुनः गृहं न आगच्छेत्' इति तयोः चिन्तनम्।

स च डिसेम्बर्मासः। तस्मिन् मासे रशियादेशे महान् हिमपातः भवति। समग्रा भूमिः हिमावृता भवति। एकम् अपि सस्यं न वर्धते।

एतादृशे काले सा विमाता सनयाम् उक्तवती– "वत्से! भवती कार्ये दक्षा खलु? मया औषधार्थं पुष्पाणि अपेक्ष्यन्ते। तानि पर्वतशिखरे भवन्ति। भवत्या तानि आनीय दातव्यानि" इति। यत् पुष्पं लोके एव नास्ति तादृशस्य काल्पनिकपुष्पस्य लक्षणम् उक्तवती सा।

सनया एतत् कार्यं सन्तोषेण एव अङ्गीकृतवती। तस्मिन् दिने एव कार्यार्थं निर्गतवती च। 'इतः परम् एषा गृहं न

"रशियादेशीया जानपदकथा"



प्रत्यागमिष्यति' इति निश्चितवत्यौ नताशा तन्माता च।

सनया कष्टेन गच्छन्ती अस्ति। हिमपातकारणतः मार्ग एव न दृश्यते। किन्तु सुदूरे पर्वतशिखरे तया कश्चन प्रकाशः दृष्टः। प्रकाशस्य दिशम् एव अनुसरन्ती अग्रे गतवती सनया।

प्रकाशः क्रमशः स्पष्टः जातः। सनया पुनरपि अग्रे गतवती। शैत्यनिवारणार्थं ज्वालितायाः हसन्त्याः प्रकाशः सः। महतः पर्वतस्य शिखरस्य उपरि हसन्तीं परितः द्वादश जनाः उपविष्टवन्तः आसन्। तेषु अन्यतमः किरीटादिकं धृत्वा उन्नते आसने उपविष्टवान् आसीत्। तस्य हस्ते राजदण्डः आसीत्। 'एषः एतेषां नायकः स्यात्' इति चिन्तितवती सनया।

सनया तेषां समीपं गत्वा विनयेन नमस्कृतवती। सः किरीटधारी प्रतिनमस्कारं कृतवान्।

अधः उपविष्टेषु कश्चित् सनयां पृष्टवान्— "वत्से! का भवती? मानवप्रवेशानर्हे एतस्मिन् प्रदेशे भवती कथम् आगता? रात्रिसमये भवती केन उद्देशेन अत्र आगता?" इति।

किं वक्तव्यम् इति अजानती सनया इतस्ततः दृष्टवती। तदा सः पुनः उक्तवान्— "वत्से! भीतिः मास्तु। निस्सङ्कोचं वदतु। वयं सर्वे मासपालकाः राजानः। अहं जनवरीराजः। आसने उपविष्टः दृश्यते खलु— एषः डिसेम्बर्राजः। एकैकमासं यावत् वयं पर्यायक्रमेण राजपदम् अलङ्कुर्मः। अग्रिममासस्य राजा अहम् अस्मि। यः राजा भवति तस्य अनुयायिनः भवामः वयं सर्वे" इति।

सनया डिसेम्बर्राजं दृष्टवती। तेनापि सनया सम्यक् दृष्टा। सुन्दर्याः एतस्याः मुखे काऽपि दैन्यता दृश्यते इति ज्ञातवान् सः। सनया स्वस्य इतिवृत्तं विस्तरेण निवेदितवती। आगमनकारणम् अपि निवेदितवती सा।

"वत्से! चिन्तां मा करोतु। भवत्याः इष्टं पूरयिष्यामः वयम्" इति वदन् डिसेम्बर्राजः सिंहासनात् अवतीर्य जून्मासाधीशं सिंहासने

उपवेशितवान्।

जून्मासाधीशः राजदण्डम् 'इतस्ततः चालितवान्। तेन पर्वते स्थितं हिमम् अदृश्यम् अभवत्। तत्र सर्वत्र वृक्षाः, लताः, सस्यानि, तृणानि, च दृष्टानि। सनया यादृशानि पुष्पाणि इच्छति स्म तादृशानि अपि तत्र दृश्यन्ते स्म।

राज्ञः आदेशस्य अनुगुणं सनया अपेक्षितानि पुष्पाणि स्वीकृतवती। गृहप्राप्तिपर्यन्तं तानि पुष्पाणि म्लानानि शुष्काणि वा यथा न भवेयुः तथा वरेण अनुगृहीतवान् जून्राजः।

स्वकार्यं समाप्य सिंहासनात् अवतीर्णवान् जून्राजः। डिसेम्बर्राजः पुनरपि सिंहासने उपविष्टवान्। पर्वतः यथापूर्वं हिमावृतः जातः। सनया कृतज्ञतावचनानि उक्त्वा तेषाम् अनुज्ञां प्राप्य गृहं प्रति प्रस्थितवती। तस्याः मुखे अपूर्वा कान्तिः विलसति स्म।

पुष्पैः सह आगतां हसन्मुखीं सनयां दृष्टवत्योः नताशा-तन्मात्रोः महत् आश्चर्यम्! 'सनया कदापि न प्रत्यागमिष्यति' इति भावयन्त्यौ ते अन्यां कर्मकरीं गृहकार्यार्थं नियोजितवत्यौ आस्ताम्। 'कल्पयित्वा उक्तानि पुष्पाणि वस्तुतः अपि आनीतानि' इति ज्ञातवत्योः तु तयोः आश्चर्यस्य सीमा एव नास्ति।

अल्पे एव काले एतत् आश्चर्यम् असूयारूपं प्राप्नोत्। ते कोपेन सनयां पश्यन्त्यौ कठोरस्वरेण पृष्टवत्यौ– "एतानि पुष्पाणि कुतः कथम् आनीतानि भवत्या?" इति।



सनया प्रवृत्तं समग्रं निवेदितवती। सर्वं श्रुत्वा नताशा मातरम् उक्तवती– "अम्ब! अहम् अपि तं पर्वतं गत्वा पुष्पाणि आनेष्यामि। एतत् कार्यं कृतवत्याः सनयायाः मुखं पश्यतु। अपूर्वा कान्तिः राजते तत्र। मम मुखम् अपि सनयायाः इव भवतु इति मम इच्छा। अतः अनुज्ञां ददातु कृपया" इति। "अस्तु" इति उक्तवती माता।

सनयया सूचितं मार्गम् अनुसरन्ती नताशा पर्वतशिखरं प्राप्तवती। हसन्तीं परितः उपविष्टान् मासराजान् अपि दृष्टवती। तेषु अन्यतमः तां पृष्टवान्– "भवती का?" इति।

"अहं या काऽपि स्यां नाम? तेन भवतः किम्? अत्र राजा कुत्र इति प्रथमं वदतु तावत्" इति औद्धत्येन उक्तवती नताशा। डिसेम्बर्राजः दण्डं चालितवान्। तस्याः उपरि हिमशिलाः पतिताः।

पुत्र्याः अनागमनं दृष्ट्वा माता स्वयं पर्वतशिखरं प्रति प्रस्थितवती। पर्वतशिखरं प्राप्य मासराजान् दृष्ट्वा कोपेन पृष्टवती– "मम पुत्री कुत्र? तां किं कृतवन्तः भवन्तः?" इति। पुत्र्या या गतिः प्राप्ता सा एव गतिः प्राप्ता तया अपि।

पत्नी-पुत्र्योः अनागमनं दृष्ट्वा खिन्नः धनिकः शय्याम् आश्रितवान्। "वत्से! गृहे यत् प्रचलति स्म तत् पश्यन् अपि अपश्यन् इव स्थितवान् अहम्। तस्य फलम् एतत्" इति खेदेन सनयाम् उक्तवान् सः।

"चिन्तां मा करोतु। ते द्वे अहम् आनेष्यामि" इति उक्त्वा पितुः सान्त्वनं कृत्वा सनया पर्वतशिखरं प्राप्य मासराजान् विनयेन प्रार्थितवती– "मम भगिनीं विमातरं च प्रत्यर्पयन्तु कृपया" इति।

करुणाशालिनः ते मासराजाः हसन्तीस्थानाम् अङ्गाराणां साहाय्येन हिमं द्रवीकृत्य नताशां तन्मातरं च उज्जीवितवन्तः।

मासराजेन दत्तस्य पुष्पस्य नाम 'डिसेम्बर्पुष्पम्" इत्येव प्रसिद्धं जातम्। गृहसदस्यैः सह सुखेन जीवितवती सनया।






# न्यायनिर्णयः

लक्ष्मीपुरनामके ग्रामे कनकदासः नाम कृषिकः निवसति स्म। सः यद्यपि धनिकः न, तथापि ग्रामे तस्य विशेषादरः आसीत्। तत्र कारणं तस्य न्यायनिर्णयक्षमता एव। ग्रामे यः कोऽपि विवादः उत्पन्नः चेत् तत्सम्बन्धिनः जनाः, ग्रामप्रमुखं न्यायस्थानं वा न पश्यन्ति। कनकदाससमीपं गच्छन्ति ते।

कनकदासः वृद्धः जातः। अतः तस्य पुत्रः वल्लभः गृहस्य स्वामी जातः। कनकदासेन प्रभूतं गौरवं तु प्राप्तं, किन्तु धनं तु न सम्पादितम्। अतः वल्लभः परम्पराप्राप्ते एकरूद्वयमिते कृषिक्षेत्रे कृषिं कुर्वन् परिश्रमेण जीवति। पूर्वं जनाः विवादपरिहारार्थं कनकदासस्य साहाय्यं यथा प्रार्थयन्ति स्म तथा ते इदानीं वल्लभस्य साहाय्यं प्रार्थयन्ति।

कदाचित् वृद्धः रामचन्द्रः पुत्रेण बलरामेण सह आगत्य विवादपरिहारं प्रार्थयन् वल्लभम् उक्तवान्– "अहं वृद्धः जातः। इदानीं परिश्रमेण कार्यं कर्तुं न शक्नोमि। एषः मम एकमात्रपुत्रः। एषः इदानीं मां वदति यत् वृद्धं भवन्तं पोषयितुम् अहं न शक्नोमि इति। वार्धक्ये अहम् अन्यत्र कुत्र गच्छामि? इदानीं मम का अन्या गतिः?" इति।

तदा पुत्रः बलरामः उक्तवान्– "एषः स्वतारुण्ये दुर्व्यसनैः सम्पादितं समग्रं नाशितवान्। भूमिम् ऋणाधीनां कृतवान्। अतः इदानीं महता कष्टेन जीवन्तः स्मः वयम्। एषः तु कृषिकार्ये गृहकार्ये वा किञ्चित् अपि न सहकरोति। विना कारणं सर्वान् निन्दन् वृथा कालं यापयति। एवं चेत् कथं जीवनं प्रचलेत्?" इति।

वल्लभः क्षणकालम् आलोच्य उक्तवान्– "रामचन्द्र, गृहस्य परिस्थितिः कीदृशी इति भवान् जानाति एव। एतादृशे सन्दर्भे सुखेन कालयापनं न चिन्तनीयं भवता। यथाशक्ति

साहाय्यं करणीयम्। पुत्रस्य कष्टम् अपि अवगन्तव्यं भवता'' इति।

''वृद्धम् अस्वस्थं माम् उपदिशति खलु— परिश्रमेण कार्यं करोतु इति। एतदपेक्षया ग्रामे भिक्षया जीवनं वरं स्यात्'' इति वदन् ततः निर्गतवान् रामचन्द्रः।

दिनानि गतानि। कनकदासः दिवं गतः। वल्लभस्य जगदीशः नाम पुत्रः जातः। जगदीशः प्रौढः अपि जातः।

कदाचित् वरदराजः नाम वृद्धः, तत्पुत्रः वीरेशः च वल्लभसमीपम् आगतवन्तौ। वरदराजः वल्लभम् उक्तवान्— ''श्रीमन्! एषः मम पुत्रः वीरेशः। महता श्रमेण अहम् एतं वर्धितवान् अस्मि। इदानीं वार्धक्ये स्थितस्य मम कीदृशी देहस्थितिः इति भवान् जानाति एव। वीरेशः इदानीं मां सम्यक् न पोषयति। अन्नवस्त्रादिकं सम्यक् न ददाति। एवम् एव परिस्थितिः चेत् इतःपरं भिक्षावृत्तिः एव शरणं मम'' इति।

तदा वीरेशः उक्तवान्— ''श्रीमन्, पिता मां सम्यक् पोषितवान् इति तु सत्यम् एव। किन्तु इदानीं गृहस्य परिस्थितिः उत्तमा नास्ति। पत्नीपुत्रादीनां पोषणे एव अहं महत् कष्टम् अनुभवामि। अतः एषः अपि सम्पादनमार्गं चिन्तयतु। स्वनिमित्तं यावान् व्ययः भवेत् तावत् सम्पाद्य ददातु। तदा कोऽपि क्लेशः न भवेत्'' इति।

एतत् श्रुत्वा वल्लभः किञ्चिदिव कोपेन उक्तवान्— ''भोः, वीरेश, किं वदति भवान्? वृद्धयोः माता-पित्रोः पोषणं भवतः कर्तव्यम्।



पितु: पोषणं भाराय इति कदापि न चिन्तनीयं भवता। भवन्तं परिश्रमेण पोषितवान् खलु पिता? अतः भवता अपि आदरेण सः पोषणीयः। तदा एव पितृऋणात् मुक्तिः भवतः। वार्धक्ये पिता कथं वा सम्पादनमार्गं चिन्तयेत्? स्वजीवनार्थम् आवश्यकं धनं पिता स्वयं सम्पादयेत् इति न चिन्तनीयं भवता। यः आहारः स्वीक्रियते तत्रैव पित्रे अपि भागः दातव्यः" इति।

लक्ष्मीपुरे भूपतिः श्रीपतिः च निवसतः। तौ वल्लभस्य समवयस्कौ। कदाचित् तौ कासारस्य तीरे उपविश्य वार्तालापं कुर्वन्तौ आस्ताम्। वार्तालापमध्ये श्रीपतिः उक्तवान्– "वल्लभं बाल्यात् अपि जानीवः खलु आवाम्। कनकदासः विवादपरिहारे अतीव समर्थः आसीत्। किन्तु तस्य पुत्रः वल्लभः न तथा। कदाचित् सः विलक्षणतया व्यवहरति। तेन एवं किमर्थं क्रियते इत्येव न ज्ञायते" इति।

"वल्लभस्य व्यवहारे तादृशी विलक्षणता का दृष्टा भवता?" इति पृष्टवान् भूपतिः।

"पूर्वं रामचन्द्र-बलरामयोः व्यवहारे वल्लभेन कीदृशः निर्णयः श्रावितः इति जानाति खलु भवान्?" इति पृष्टवान् श्रीपतिः।

"आं, जानामि। पित्रा रामचन्द्रेण पुत्रस्य साहाय्यं करणीयम् इति उक्तवान् सः। पितुः रामचन्द्रस्य एव दोषः इति तस्य आशयः आसीत्" इति उक्तवान् भूपतिः।

"किन्तु सद्यः वरदराज-वीरेशयोः



व्यवहारे वल्लभेन किम् उक्तम्? वीरेशस्य एव दोषः इति निर्णयः उक्तः तेन। उभयत्रापि विवादस्य विषयः समानः आसीत्। किन्तु एकत्र पितृपरतया निर्णयः। अपरत्र पुत्रपरतया निर्णयः। एतत् तु विचित्रं खलु" इति उक्तवान् श्रीपतिः।

तदा भूपतिः उक्तवान्— "वल्लभः योग्यं निर्णयं श्रावितवान् इति मम आशयः। अन्यच्च तत्तस्य जीवनानुभवः अपि निर्णयकथने प्रभावं जनयति इति अहं भावयामि" इति।

"तन्नाम रामचन्द्र-बलरामयोः विवादस्य निर्णयसमये वल्लभस्य यः जीवनानुभवः आसीत्, तस्मात् भिन्नः जीवनानुभवः द्वितीयस्य विवादस्य परिहारसन्दर्भे आसीत् इति?" इति पृष्टवान् श्रीपतिः।

"आम्। 'बलरामस्य दोषः नास्ति, रामचन्द्रेण एव गृहकार्ये साहाय्यं करणीयम्' इति आसीत् वल्लभस्य निर्णयः। यतः तदानीं तस्य पिता कनकदासः जीवति स्म। अतः पुत्रपरः आसीत् वल्लभः। अन्यच्च रामचन्द्रः तारुण्ये दुर्व्यसनाधीनः आसीत् इत्यतः वल्लभेन तथा उक्तम्" इति उक्तवान् भूपतिः।

"वरदराज-वीरेशयोः व्यवहारे वरदराजपरतया किमर्थं निर्णयः श्रावितः तेन?" इति कुतूहलेन पृष्टवान् श्रीपतिः।

"येन पुत्रः परिश्रमेण पालितः, तस्य वार्धक्ये सः पुत्रैः पालनीयः इति उक्तं वल्लभेन। यतः वल्लभस्य गृहे तादृशी परिस्थितिः अस्ति। अतः वृद्धः पिता पुत्रेण पालनीयः इति निर्णयः उक्तः" इति उक्तवान् भूपतिः।

"एवं तर्हि निर्णायकस्य जीवनानुभवानुगुणं निर्णये परिवर्तनं भविष्यति इति भवतः कथनम्" इति उक्तवान् श्रीपतिः।

"आम्। यत्र अनुभवबलस्य आधारेण न्यायनिर्णयः क्रियते तत्र तत्तस्य जीवनानुभवस्य पात्रं भवति एव" इति हसन् उक्तवान् भूपतिः।






# चतुरः शशः

अरण्यसमीपे कश्चन कृषिकः निवसति स्म। सः गृहं परितः शाकोद्यानं निर्मितवान् आसीत्। शाकोद्याने विविधजातीयानि सस्यानि सम्यक् वर्धितानि आसन्। कदाचित् केनचित् शशेन एतत् उद्यानं प्रविष्टं, शाकानि खादितानि च। तानि तु रुचिकराणि आसन्। अतः शशः प्रतिदिनम् आगत्य शाकानि खादति।

कृषिकेण एतत् लक्षितम्। सः उद्यानवृतेः पार्श्वे रज्ज्वा पाशं विरचय्य स्थापितवान्। शाकखादनार्थं गच्छन् शशः पाशेन बद्धः अभवत्।

शशः पाशात् विमोचनं प्राप्तुं यदा प्रयत्नं कुर्वन् आसीत् तदा तत्र आगतः कृषिकः– "अये, भवान् एव वा शाकखादकः? पाशात् विमोचनं प्राप्तुं न शक्यते। श्वः प्रातः भवन्तं दण्डेन दण्डयित्वा मारयिष्यामि" इति उक्त्वा ततः निर्गतवान्।

"हा हन्त!" इति खेदम् अनुभवन् आसीत् शशः। तावता कृषिकस्य कुक्कुटानां ग्रहणार्थं तत्र आगतः शृगालः शशम् अपश्यत्। आश्चर्येण अपृच्छत् च– "किमर्थं बन्धनं भवतः?" इति।

शशः कृत्रिमं हासं प्रदर्शयन् अवदत्– "धेनुमात्रा अनुरोधपूर्वकं बद्धः अस्मि अहम्। श्वः तस्याः वत्सस्य नामकरणोत्सवः इति श्रूयते। सर्वे पशवः आह्वातव्याः इति तस्याः इच्छा। एवम् आह्वानार्थम् अरण्यम् आगता सा माम् आनीय एवं बद्धवती। 'मम पुत्राः अस्वस्थाः। उलूकवैद्यस्य गृहात् औषधम् आनेतव्यम् अस्ति मया' इति एतत् मम वचनं न श्रुतवती सा। 'अद्य कोऽपि बन्धुः गृहे भवेत् एव' इति वदन्ती माम् अत्र बद्धवती। 'अन्यं बन्धुम् अत्र स्थापयित्वा भवान् इतः गत्वा

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

औषधम् आनीय गृहे दत्त्वा आगन्तुम् अर्हति' इति तस्याः आदेशः'' इति।

''माम् अपि भोजनार्थम् आह्वयेत् वा सा?'' इति भावि भोजनं स्मरन् कुतूहलेन अपृच्छत् शृगालः।

''अथ किम्? मातुलः शृगालः न आगतः चेत् उत्सवे शोभा एव न भवेत् इति वदति स्म सा। अतः भवान् पाशग्रन्थिं शिथिलीकृत्य पाशं स्वकण्ठे योजयतु। किञ्चित्कालम् अत्र तिष्ठतु। अहम् औषधम् आनीय गृहे स्थापयित्वा सूर्योदयाभ्यन्तरे प्रत्यागमिष्यामि'' इति अवदत् शशः।

शृगालः शशं बन्धविमुक्तं कृत्वा आत्मानं पाशबद्धम् अकरोत्। शशः ततः अधावत्।

उषःकालः जातः। तिन्त्रिणीदण्डेन सह आगतः कृषिकः पाशबद्धं शृगालं दृष्ट्वा– ''अहो, कुक्कुटचोरः शृगालः एव बद्धः। दण्डयिष्यामि एतम्'' इति वदन् तिन्त्रिणीदण्डेन त्रिचतुर्वारम् अताडयत्। तावता दण्डः च्छिन्नः। ''एतम् उद्दिश्य शुनकान् प्रेरयिष्यामि'' इति वदन् गृहं गतवान् कृषिकः।

शशः गुल्मात् बहिः आगत्य– ''भवान् इतोऽपि अत्रैव अस्ति खलु? धेनुमाता न आगता वा?'' इति शृगालम् अपृच्छत्।

''भोः, प्रथमं भवान् मां पाशात् मोचयतु। उत्सवभोजनं मास्तु मम'' इति दैन्येन अवदत् शृगालः।

''शृगालमित्र! किमर्थं त्वरा? धेनुमाता इदानीम् आगच्छेत्'' इति अवदत् शशः।

''भोः, भवतः पादौ गृह्णामि। कृपया मां बन्धविमुक्तं करोतु'' इति प्रार्थनाम् अकरोत् शृगालः।

तावता कृषिकस्य आगमनं दूरात् दृष्टम्। शुनकानां भषणध्वनिः अपि श्रुतः। 'इतःपरं विनोदेन अलम्' इति भावयन् शशः पाशस्य ग्रन्थिं शिथिलीकृत्य ततः अधावत्। पाशात् मुक्तः शृगालः शुनकेभ्यः आत्मानं रक्षन् अरण्यं प्रति वेगेन अधावत्।



## जलम् उत्प्रेरयति तिमिङ्गिलः?



तिमिङ्गिलः जलम् उत्प्रेरयति इति जनाः भावयन्ति। किन्तु वस्तुस्थितिः तथा न। चिरकालं यावत् तरणात् जलवासात् च तिमिङ्गिलस्य श्वासकोषे स्थितः वायुः उष्णः भवति। तिमिङ्गिलः समुद्रस्य उपरितलम् आगत्य नासिकाम् उद्घाटयति। तदा बाष्पं निस्सरति। उष्णं तत् बाष्पं परिसरशैत्यात् शीतलं सत् दण्डाकारेण उपरि उद्गच्छति।

## नीडम् अलङ्करोति पक्षी

न्यू गिनिया, आस्ट्रेलिया इत्यादिषु प्रदेशेषु निवसन् बोवर्जातीयः पक्षी लघुभिः शलाकाभिः भूमेः अन्तः नीडं निर्माति। स्वजातीयायाः पक्षिण्याः चित्तस्य आकर्षणार्थं सा प्रकाशमानानि वस्तूनि पुष्पाणि च नीडेषु योजयति।





## मशकदंशनात् मरणम्

युद्धात् आकस्मिकघटनाभ्यः च यावता प्रमाणेन मरणानि सम्भवन्ति तावता एव प्रमाणेन मलेरियारोगतः अपि मरणानि सम्भवन्ति, येषां च मशकविशेषस्य दंशनं कारणम्। आफ्रिकादेशे एशियाखण्डे च एतादृशात् मशकदंशनात् प्रतिवर्षं दशलक्षजनाः प्राणैः वियुक्ताः भवन्ति इति श्रूयते। एतादृशं मरणं बहुभ्यः वर्षेभ्यः अनुवर्तमानम् अस्ति।

# आकाशवाणीं निर्वापयतु रे।

| | |
|---|---|
| भगिनी- भोः, आकाशवाणीं निर्वापयतु रे। | I say, please switch off the radio. |
| भ्राता - समीचीनं गीतं श्रूयते। तिष्ठतु तत् तथैव। | The song is good. Let it be there. |
| भ - शब्दश्रवणात् मम एकान्तता नश्यति। | The sound disturbs me. |
| भ्रा - तर्हि अन्यस्मिन् प्रकोष्ठे उपविश्य पठतु भवती। | Go to another room and read if it is so. |
| भ - तत् न शक्यते। सर्वदा यत्र उपविश्य पठ्यते तत्रैव उपविश्य पठामि अहम्। | It is not possible. I always read in one and the same place. |
| भ्रा - तर्हि विना वचनं पठतु। चित्र-गीतकार्यक्रमस्य समाप्तेः अनन्तरम् आकाशवाणीं निर्वापयिष्यामि। | Then read, don't talk. I will switch off the radio after 'Chitrageetam' is over. |
| भ - भवान् अत्र पठितुम् उपविष्टः, उत चित्रगीतं श्रोतुम्? | You are sitting here to read or listen to 'Chitrageetam'? |
| भ्रा - अहं चित्रगीतं शृण्वन् एव पठन् अस्मि। | I am reading and also listening to the music. |
| भ - अहो, द्व्यवधानी भवान्! पुस्तकपठनं व्याजः। पितुः आगमनस्य अनन्तरं सर्वं निवेदयिष्यामि। | Oh, I see, You can do two things at a time! Reading is only a pretext. I will tell father every thing when he returns. |
| भ्रा - निवेदयतु, तेन मम न काऽपि हानिः। | Tell him, I do not lose anything. |
| भ - अद्वितीयः पुत्रः इत्यतः भवान् लाल्यते सर्वैः। अतः एवं दौष्ट्यम् आचरति। | You are the only son of your father. That is why you are arrogant. |
| भ्रा - मयि प्रीतिप्रदर्शनं सोढुं न शक्नोति भवती। अतः एवं वदति। | I know you do not like people loving me. That is why you say that. |
| भ - अलं चर्चया। मौनं पठतु तावत्। | Arguments enough. Read silently. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां एप्रिल्-९१ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा फेब्रवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'डिसेम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **मेरुदण्डे नतेऽपि वहति छत्रं मेरुगात्रम्।**

द्वितीयचित्रम् - **अननुरूपः सम्बन्धः बालानामप्युपहासपात्रम्।**

प्रेषकः - श्री प्रकाश. जि. भट्ट, राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपति, (आ.प्र.)


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अग्निपेटिका - | Match Box |
| अवितर्किता - | Unexpected |
| आच्छादकम् - | Blanket |
| उच्छृङ्खलम् - | Recklessly |
| उत्सङ्गः - | Lap |
| औद्धत्यम् - | Arrogance |
| कर्मकरी - | Maid servent |
| कापुरुषः - | Bad man |
| कुक्कुटः - | Cock |
| क्षेपणी - | Jet |
| जामाता - | Son-in-law |
| ज्या - | Bowstring |
| टङ्कारः - | The twang of a bowstring |
| तन्तुवायः - | Weaver |
| दुर्व्यसनम् - | Bad habbit |
| दृप्तः - | Insolent |
| निर्वेदः - | Disgust |
| पर्यायक्रमः - | By turn |
| पाशः - | Noose |
| पाषाणः - | Stone |
| पिपासा - | Thirst |
| बद्धादरः - | Committed |
| बाष्पम् - | Steam |
| बिरुदः - | Title |
| भल्लूकः - | Bear |
| भषणम् - | Barking |
| मशकः - | Mosquito |
| वरण्डकः - | Seat fixed on an elephant's back |
| वार्ताहरः - | News reporter |
| विमाता - | Step mother |
| विवशः - | Helpless |
| शशः - | Rabbit |
| शाकः - | Vegetable |
| शिबिरम् - | Tent |
| शृगालः - | Fox |
| शोभायात्रा - | Procession |
| सन्नद्धः - | Prepared |
| हसन्ती - | Stove |

* *